समयोचितभोजनप्रथा-
नुदितैकान्तखलैकगोष्ठिका ॥२२॥

ततः शयनशालाप्रवेशः । कथं तत्र किं किं विधेयम्, इत्यमेतदेतत् ।

कृतदक्षिणपूर्वशीर्षिका-
स्तरणासंवृतसूत्रशय्यिका ।
शयनीयशिरोवितर्दिका-
विलसद्वारिसुवर्णकुम्भिका ॥२३॥

ततो नृपाज्ञया शयनशालाप्रवेशोत्तरं पूर्वराजकथानवनीतिनिबन्धप्रहेलिकादिश्रवणपूर्वकसितसुगन्धिगोदुग्धपानमपि ।

प्रभुबोधितसंस्तरोल्लस-
च्छयना पूर्वनृपोक्तिभावना ।
नवनीतिनिबन्धविस्तरा
ससितोद्भूतसुगन्धिदुग्धिका ॥२४॥

ततः कृतमुखादिशुद्धिः शयनासनं समाश्रयेत् ।

विमलाख्यसमाश्रितासना
सतताह्लादकवार्त्तिकक्षणा ।
अधिकागतसद्विसर्ज्जना
समयोत्थापनवाक्यसंग्रहा ॥२५॥

अत्र विमलाख्येत्यनेन हस्तपादादिशुद्धिरपि तदोपलक्षिता शयनस्य पादादिशुद्धिपूर्व्वकाभिहितत्वात् अस्त्वेवमपि ततः किं कुर्व्वन् शयीत, एतदिति ।

रघुनाथपदाब्जसंस्मृति-
प्रथमालम्ब(१)नलब्धनिद्रिका ।

---

१ । 'म्ब' क ख ग पाठः ।

समयोर्य्यतिवाक्यविप्लवो-

ऽभयजाग्रद्वरवंशयामिका ॥२६॥

शयनावसरे पुनस्तत्समय एवोत्थापनीयोऽहमित्याज्ञा देया, यामिकैश्च सुकुलीनैर्जागरूकैरिव भाव्यमिति । अत्र तैस्तैरेव विधिबोधकैर्विशेषणै राजपद्धतिरपि व्याख्येया ॥

इति श्रीमन्महाराजाधिराजजम्बूकाश्मीराद्यनेकदेशाधिपति-श्रीरणवीरसिंहवर्म्मादिष्ट-कुरुक्षेत्रमध्यरेखान्तर्गतपुण्डरीकपुरवासिश्रीदुर्गादत्तात्मज-नन्दचण्डीदासकृता त्रयोविंशतिश्लोक्या प्रथमाह्निकपद्धतिः श्रीसुन्दरीवृत्ते वर्णिता ॥

---

अथ

# द्वितीया ।

अथानुष्टुभा ततोऽतिसुगमान्या पञ्चदशश्लोकी च । अत्र षष्टिदण्डात्मकदिनस्य घटीनां तत्तत्संख्याकघटीसाध्यकार्य्यविधानबोध्यतया वाचनिकत्वेन सुगमत्वमिति भावः । पूर्व्वत्र तु कालस्य यावद्घटीसाध्यविहितकार्य्यसिद्धया लक्षितत्वमस्यां तु वाचनिकत्वमिति । अथास्या विधानेऽन्यदपि निमित्तम्, तद्यथा ।

सरसा सरला पद्या दर्शितापि मया पुरा ।

परा श्लेषभयादन्यानीयते नृपभीरुणा ॥ १ ॥

अथ युवराजप्रबोधावसरो यथा ।

मुहूर्त्तमात्रशेषायां रात्रौ राजात्मजः शनैः ।

प्रबोधनीयो विदुषा सरागैः सुषिरस्वनैः ॥ २ ॥

कदाचित् तैरत्यन्तसुखसाधकैः प्रबोधो न स्यात्—अत आह ।

तन्मञ्जुनिस्वनोद्भूतनिद्रश्चेद्बोध्यतां तदा ।

तदिङ्गितज्ञैरथवा पादसंवाहनैः शनैः ॥ ३॥

ततोत्थाय स्वेष्टदेवस्मरणं स्वकरयोर्मङ्गलवस्तुनश्च वीक्षणं वेगोत्सर्गशौचदन्तधावनस्नानादीनि कर्त्तव्यानीत्याह ।

तत्रेष्टस्मृतिपूर्व्वात्मिहस्तमङ्गलवीक्षणम् ।
वेगोत्सर्गशुचिदन्तधावनस्नानमाचरेत् ॥ ४ ॥

सूर्य्योदयाग्रे षष्टिदण्डात्मकदिनस्य विभागमाह ।

अतोऽग्रे घटिका षष्टिरङ्के स्तु तद्विधिः क्रमात् ।
विभज्यतेऽत्र संसिद्धैः पद्यैरापुनरुत्थितेः ॥ ५ ॥

ततः पूर्व्वोपक्रान्तं दिननिशोघटोविभागं दर्शयन्नाह चतस्र इत्यादिदशभिः श्लोकैः । तत्राद्यस्य पूर्व्वार्धेन प्रथमघटीचतुष्टयकृत्यमुत्तरार्धेन नाडीषट्कस्य च कृत्यमाह

चतस्रो घटिकाः पूर्व्वाः संध्यापाठाश्वचालनैः ।
नेया वेदादिशास्त्रस्याभ्यसनेन षड्ग्रिमाः ॥६ ॥

ततो नृपाह्वानपूर्वकभोजनशौचादिना घटोद्दयं नेयम् । "भुक्त्वा शतपदं गच्छेदि"ति वाक्यबोधितपदसंचारेण क्रोडनकैश्चार्ग्रिमो यामो नेयः इत्याह

नृपाह्वानपुरस्कारभुक्तिशौचैर्घटोद्दयम् ॥
सशतैः पदसंचारैर्यामं क्रोड़नकैर्नयेत् ॥ ७ ॥

ततोऽप्यर्(१)धयाममिङ्गिलिशाधीगानामिङ्गिरेजपदवाच्यानां विद्याभ्यासेनान्तःपुरे मातृसन्निधौ यथेष्टं द्राक्षा-पिस्तबातामसितादिभक्षणक्रमेण च नयेदित्याह यामश्चेङ्गिलिशेति,—उत्तरार्द्धेन पुनः श्रीचमहाराजसमाजगमनं तदाज्ञामात्यवर्गादीक्षणैर्घटोद्दयं च नयेदित्याह ।

यामश्चेङ्गिलिशाधीशविद्ययान्तर्भुत्ति क्रमैः ।
पुनः श्रीचमहाराजदर्शनाज्ञे(२) क्षणैर्द्वयम् ॥ ८ ॥

ततः परमासायंकालावधिकं घटोचतुष्टयात्मकं कालं दशसंख्याकवपुगोलकयन्त्रचालनेन वाजोभाद्यारोहणेन च सेनायाः सांग्रामिकव्यूहवीक्षणेन च नयेदित्याह

दिक्गोलयन्त्रसंचारवाजीभारोहणैः परम् ।
सेनासांग्रामिकव्यूहवीक्षयाऽऽसायमुन्नयेत् ॥ ९ ॥

ततो वीक्षिताश्वहस्तिशिविकाधारकादिगतिविशेष सेनाव्यूहादीनामसमीचीनतां समीचीनतां च प्रभवे निवेदयेदित्याह

१ । ततोऽर्धं ख० पाठः । २ । ये क्षणंद्वयम् ख० ग० पाठः ।

तत्तत्सम्यगसम्यक्त्वविज्ञप्तिविभवे ततः ।

सहभोजनमापृच्छ्य शयनालयमाविशेत् ॥ १० ॥

तत्कीदृशं विधेयं कथं च शय्याशीर्षादिकं कार्यमित्याह

पूर्वस्यां दक्षिणस्यां वा कुर्याच्छय्याशिरो दिशि ।

तच्छिरोवेदिकायां हि सजलं कलशं न्यसेत् ॥ १० ॥

तत्र स्वयमेक एवैकेन पार्श्वगेन वा बहुभिः सह प्रविशेदित्याकांक्षायामाह

यत्र कुत्रापि रहसि नैकस्त्वेकेन संविशेत् ।

कुलीनैर्बहुभिः सार्द्धं स्थेयमात्महितैः सह ॥११॥

तत्र प्रविश्योपविश्य च सुखासने पूर्वराजवृत्तान्तविदो बुद्धिमतो नयज्ञान् तत्तत्कथायै तदाज्ञापयेदित्याह

आज्ञापयेत्ततः प्राज्ञान् पूर्वभूपकथाविदः ।

कथायै कथनीयानामुपवेश्यासने सुखम् ॥ १२ ॥

कियन्तं कालं तत्तत्कथाश्रवणेन यापयेदित्यपेक्षायामाह

सदाचारमहावीर्यपूर्वराजकथानकैः ।

याममेकं नयेद्यावत् स्यान्निद्राभिमुखं मनः ॥१३॥

ततो गूढार्था अपि गाथाः श्रोतव्याः प्रष्टव्याश्च स्वयं तर्कनीया अपीत्यर्थान्तं सूचयन् शय्योपवेशमाह

शृण्वन् गाथा गरीयोर्थाः पृच्छन्नातर्कयन्नपि ।

समारोहेत् सुखस्पर्शं शयनं संस्मरन् हरिम् ॥ १४ ॥

ततः ससितं गोदुग्धं पीत्वा शौचं विधाय तत्समयस्मरणीयान् संस्मरन् क्षणं तिष्ठेदित्याह

ससितं गोपयः पीत्वा शुचिर्भूत्वा समाहितः ।

स्मरंस्तत्समयस्मर्यानुपतिष्ठेत्ततः क्षणम् ॥ १५ ॥

ततः समये पुनरुत्थापनीयोऽहमिति यामिकानादिश्य कदाचिज्जाग्रत् तद्वृत्तान्यदलोकदंश्च स्वप्या(२)दित्याह

१ । 'पे' क० ख० पाठः ।

समये पुनरुत्थानं काममादिश्य यामिकान् ।
सुप्त्वाप्या(१)दपि तद्वृत्तं कदाचिज्जाग्रदुद्धरेत् ॥१६॥

अस्याः करणे स्वप्रयोजनं सूचयन्नाह

इयं स्ववर्गसंसिद्धा विधिसोपानपद्धतिः ।
श्रीमत्प्रतापसिंहाख्ययुवराजमुदेऽस्तु मे ॥ १७ ॥

तन्मुदेऽस्याः करणे तव को हेतुरित्यपेक्षायामाह

सा श्रीमद्रणवीरादिसिंहसम्भृतां मया ।
नव्यचण्डीसहायेन संभृता श्रीमतां गिरा ॥ १८ ॥

पूर्वं तु नव्यचण्डीदास इत्युक्तमधुना नव्यचण्डीसहाय इति को जानीयात्, केन कृतेति संशयं वारयन् स्वदेशपुरपित्रादिनामपूर्वकात्मशर्मज्ञानाय पुनराह

पुण्डरीके पुरे श्रीमद्दुर्गादत्तात्मजः कविः ।
कुरुक्षेत्रे ह्ययं नव्यचण्डीदासोऽपि कीर्त्यते ॥ १९ ॥

तेषां किमन्ये पण्डिता न सन्ति यद्भवानेवाश्रित इत्याशङ्कां परिहरन् प्रभोरभिज्ञतामाह ।

सत्स्वप्यन्येषु विद्वत्सु रक्षन्त्यागतमादरात् ।
भवन्ति विभवोऽभिज्ञाः शरणागतरक्षिणः ॥ २० ॥

इति श्रीकुरुक्षेत्रमध्यरेखान्तर्गत-पुण्डरीकपुरप्रसिद्ध-शिवालवंशावतंस-श्रीदुर्गादत्तात्मज-नव्यचण्डीदासनिर्मिता द्वितीया पद्धतिः ॥२॥

१। पि क० ख० पाठः

# सराजनीतिः ।

——:o:——

ॐ अथ प्रातःस्मरणीयादिपद्यपरिष्कृता क्वचित् स्मृति-प्रमाणपूर्वकविधाना सरससरलपेशलमनोहरसंस्कृतपदा जम्बू-काश्मीराद्यनेकदेशाधिप-श्रीमन्महाराजाधिराज-श्रीरणवीर-सिंहवर्मप्रभुवर्य्योदितविधिविशेषभास्वरा संक्षिप्ताह्निकपद्धतिः श्रीमत्प्रतापसिंहयुवराजाद्यनुष्ठानाय मया नव्यचण्डीदासेन निबध्यते ।

अथ सूर्य्योदयात् प्राक् द्विघटिकात्मके काले ब्राह्ममुहूर्त-संज्ञके वा प्रातःकाल एव प्रबुध्येत । तत्र विष्णुः—

"रात्रेः पश्चिमयामस्य मुहूर्तो यस्तृतीयकः ।
स ब्राह्म इति विज्ञेयो विहितः संप्रबोधने ॥"

इति । तस्मात् प्रातःकाल एव जागरणीयं तत्समये निद्रायां दोषोऽपि । तथोक्तम्—

"ब्राह्मे मुहूर्त्ते या निद्रा सा पुण्यक्षयकारिणी ।
तां करोतीति यो मोहात्पादकृच्छ्रेण शुध्यति ॥"

अतस्तत्रोत्थाय तत्र स्मरणीयान्देववरादीन् संस्मरेत् । तदुक्तं मत्स्यपुराणे—

"ब्राह्मे मुहूर्त्ते प्रथमं विबुध्ये-
दनुस्मरेद्देववरान् मुनींश्च ।
प्राभातिकं मङ्गलमेव वाच्यं
यदुक्तवान् देवपतिस्त्रिनेत्रः ॥"

2564



तत्र पूर्वं हरिरेव स्मर्तव्यः, तदुक्तं व्यासेन—

ब्राह्मे मुहूर्ते पुरुषस्त्यक्तनिद्रो हरिं स्मरेत्।
आलोक्य मङ्गलं द्रव्यं कर्मावश्यकमाचरेत्" ॥

इति। तथा च स्कान्दे—

"शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम्।
कीर्तनात्तस्य पापानि नाशमायान्त्यशेषतः" ॥

इति। तत्स्मरणं स्कान्दे—

"प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै
नारायणं गरुड़वाहनमब्जनाभिम्।
ग्राहाभिभूतवरवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १ ॥
प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्दयुगलं परमस्य पुंसः।
नारायणस्य नरकार्णवतारणस्य
पारायणं प्रवणचित्तपरायणस्य ॥ २ ॥
प्रातर्भजामि भजतामभयंकरं तं
प्राक्सर्वजन्मकृतपापभयापहत्यै।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर-
शोकप्रणाशमकरोद्धृतशङ्खचक्रः ॥ ३ ॥
श्लोकत्रयमिदं पुण्यं प्रातरुत्थाय यः पठेत्।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ ४ ॥"

ततः सर्वदेवादिपूज्यत्वाद् गणेशस्मरणं सद्धर्मचिन्तामणौ

"प्रातः स्मरामि गणनाथमनाथबन्धुं
सिन्दूरपूरपरिशोभितगण्डयुग्मम्।
उद्दण्ड(१)विघ्नपरिखण्डनचण्डदण्ड-
माखण्डलादिसुरनायकवृन्दवन्द्यम् ॥ १ ॥

१। 'हीणं' क० पाठः।

प्रातर्नमामि चतुराननवन्द्यमान-
मिच्छानुकूलमखिलं च वरं ददा(१)नम् ।
तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं
पुत्रं विलासचतुरं शिवयोः शिवाय ॥ २ ॥
प्रातर्नमाम्यभयदं खलु भक्तशोक-
दावानलं गणविभुं वरकुञ्जरास्यम् ।
अज्ञानकाननविनाशनहव्यवाह-
मुत्साहवर्धनमहं सुतमीश्वरस्य ॥ ३ ॥
श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् ।
प्रातरुत्थाय सततं यः पठेत् प्रयतः पुमान् ॥ ४ ॥

सूर्यादीनामपि स्मरणं श्रीरणवीरसिंहाचारचिन्तामणौ द्रष्टव्यं, वाक्यानि विस्तरभयान्नात्र लिखितानीति। अथ वेष्टदेवरघुनाथस्मरणम् ।

"प्रातः स्मरामि रघुनाथमुखारविन्दं
मन्दस्मितं मधुरभाषिविशालभालम् ।
कर्णावलम्बिचलकुण्डलशोभिगण्डं
कर्णान्तदीर्घनयनं नयनाभिरामम् ॥ १ ॥
प्रातर्नमामि रघुनाथकरारविन्दं
रक्षोगणाय (२) भयदं वरदं निजेभ्यः ।'
यद्राजसंसदि विभज्य महेशचापं
सीताकरग्रहणमङ्गलमाप सद्यः ॥ २ ॥
प्रातर्भजामि रघुनाथपदारविन्दं
पद्माङ्कुशादिशुभलक्ष्मधरं वरेण्यम् ।
योगीन्द्रमानसमधुव्रतसेव्यमानं
शापापहं सपदि गौतमधर्मपत्न्याः ॥ ३ ॥
प्रातर्वदामि वचसा रघुनाथनाम
वाग्दोषहारि सकलं शमलं निहन्ति ।
यत्पार्वती स्वपतिना सह मोक्ष (३)कामा
प्रीत्या सहस्रहरिनाम समं जजाप ॥ ४ ॥

---

१। 'धा' क० ख० पाठः। २। 'दिभयती' क० ख० पाठः। ३। भीक्ष्णु ग० पाठः।

प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं
नीलाम्बुदोत्पलसितेतररत्ननीलाम् ।
आमुक्तमौक्तिकविशेषविभूषणाढ्यां
ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥

यः श्लोकपञ्चकमिदं प्रपठेत्तु नित्यं
प्रभातकाले पुरुषः प्रबुद्धः ।
श्रीरामकिंकरजनेषु स एव मुख्यो
भूत्वा प्रयाति हरिलोकमनन्यलभ्यम्" ॥ ६ ॥

वामनपुराणे च —

ब्रह्मा मुरारिस्त्रिपुरान्तकारी
भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ १ ॥

भृगुर्वसिष्ठः क्रतुरङ्गिराश्च
मनुः पुलस्त्यः पुलहश्च गौतमः ।
रैभ्यो मरीचिश्च्यवनश्च दक्षः
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २ ॥

सनत्कुमारः सनकः सनन्दनः
सनातनोऽप्यासुरिपिङ्गलौ च ।
वोढस्तथा पञ्चशिखश्च योगी
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ३ ॥

पृथ्वी सुगन्धा सरसास्तथापः
स्पर्शः सवायुर्ज्वलनं सतेजः ।
नभः सशब्दं महता सहैव
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ४ ॥

सप्तार्णवाः सप्त कुलाचलाश्च
सप्तर्षयो द्वीपवनानि सप्त ।
भूरादि कृत्वा भुवनानि सप्त
कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ५ ॥

इत्थं प्रभाते परमं पवित्रं
पठेत् स्मरेद्वा शृणुयाच्च तद्वत् ।
दुःस्वप्ननाशोऽनघ (१) सुप्रभातं
भवेच्च नित्यं भगवत्प्रसादात् ॥ ६ ॥

## ततः पुण्यश्लोकान् कीर्तयेत् ।

पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ १ ॥
धर्मो विवर्धति युधिष्ठिरकीर्तनेन
पापं प्रणश्यति वृकोदरचिन्तनेन ।
शत्रुर्विनश्यति धनंजयकीर्तनेन
माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ २ ॥

## ततोऽष्टचिरजीविनः स्मरेत्

अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ १ ॥
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ २ ॥

## पञ्चकन्यास्मरणम्

"अहल्या द्रुपदी तारा सीता मन्दोदरी तथा ।
पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम्" ॥

## ततो मन्त्रेण स्वकराववलोकयेत् यथा—

"कराग्रे वसति लक्ष्मीः करमध्ये सरस्वती ।
करमूले च गोविन्दः प्रभाते करदर्शनम् ॥"

ततस्तत्र पादनिक्षेपणार्थं पृथिवीं प्रार्थयेत् । तथाच प्रयोगपारिजाते

"समुद्रवसने देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे" ॥

१ 'नव' क० ग० पाठः ।

तत उत्तिष्ठन्मङ्गलानि वस्तूनि पश्येत्, कानि मङ्गलानि इमानि।

"लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः॥"

एतेषु यथासंभवं पश्येत्। तदुक्तं कात्यायनेन

"श्रोत्रियं सुभगं गां च अग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्येदापद्भिः स प्रमुच्यते॥ १॥
रोचनां चन्दनं गन्धान्मृदङ्गं दर्पणं मणिम्।
गुरुमग्निं रविं पश्येन्नमस्येत् प्रातरेव हि॥ २॥"

उत्थानसमये पूर्वमिमे न दर्शनीयाः

"पापिष्ठं दुर्भगं चान्धं नग्नमुत्कृत्तनासिकाम्।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम्॥ १॥"

नग्नमत्र बालकादपरं न पश्येत्। ततः प्रथमं मातापित्रोर्दर्शनं वन्दनं च कुर्यात्। तदुक्तं ब्रह्मपुराणे

"उत्थाय मातापितरौ पूर्वमेवाभिवादयेत्।
आचार्यश्च ततो नित्यमभिवाद्योऽभिजानता॥ १॥"

अनात्मप्रस्वेदन्तरागमने राजपुत्रो मनसा तौ नमस्येत्, वृद्धौ चेन्मातापितरौ स्वयं राज्याभिषिक्तोऽपि प्रत्यहं प्रातः पुरा तौ नमस्कुर्यात् पश्चादन्यद्विदध्यादिति। अथ राजपुत्रोत्थापनप्रकारः।

मधुरतरैर्ध्वनिभिर्ललितवल्गमनोहररागैः राजपुत्रं प्रातर्वैतालिकाः प्रबोधयेरन्। यद्यप्युक्तम् "वाद्यादिविशेषैः राजपुत्रः प्रबोधनीय" इति शास्त्राचारात् तथापि प्रभोरादेशात् व्यसनविशेषभयाच्च कथमपि प्रबोध्य एवेति, अथवा

तदिङ्गितज्ञा निपुणधियो विधानकुशलाः पार्श्वचराः पाद-संवाहनादिभिर्जागरयेयुः ॥

इत्याह्निकपद्धत्यां प्रबोधात्मिका प्रथमा विश्रान्तिः ।

---

अथातिसंक्षेपतयाह्निकविधिः श्रीमदाज्ञापूर्वकं संस्कृत-पदैरेव प्रदर्श्यते,प्रातरारभ्य यावत्सुखशयनोत्थितेः । अथ सूर्योदयात्प्राक् प्रातर्घटीद्वयात्मके काल एवोत्थानं कर्तव्यम् ।(१) ततः प्रातः पठनीयान् पठेत् स्मरेच्च स्मर्तव्यान् स्वेष्टदेवादीन् । ततः स्वकराववलोकयेत् मङ्गलवस्तूनि सुवर्णगोब्राह्मणादीन्यथासंभवं पश्येत् । उत्तिष्ठन् झटिति शयनवासांसि नोत्तारयेत् यतो बाह्यवायुः सपदि वसनोत्तारणे स्पृष्टो विकृतिं जनयति । ततोऽन्यद्वस्त्रं परिधाय यज्ञोपवीतं दक्षिणे कर्णे कृत्वा शिर आवृत्य पूर्वस्थापितमृत्तिकालोष्टजलपात्रे तत्स्थाने गत्वा तृणमृण्मयादिपा(२)त्राच्छादितभूप्रदेशे यथासुखं मुखनासिकाय दत्तवसनो मौनी मलमूत्रोत्सर्गं कुर्यात् तत्र चिरं न तिष्ठेन्न मलं वीक्षेत । उत्सृष्टमलो मृत्तिकालोष्टद्वयेन त्रयेण वा मूलद्वारं संशोध्य गृहीतशिश्नः स्थानान्तरे गत्वा शौचं कुर्यात् । देशावलोकनार्थं(३) मार्गे च दूरं नैर्ऋत्यां दिशि गच्छेत् । शत्रुभिः साशङ्कश्चेद्देशस्तदा शिविरसमीपे वेगोत्सर्गार्थं तस्यामेव दिशि दूष्यं स्थापनीयमिति । तत्र तत्क्रमः । पूर्वमेकवारं लिङ्गे मृत्तिकां दत्त्वा लिङ्गं जलेन क्षालयेत् । ततस्तिसृभिर्मृत्तिकाभिर्गुदं प्रक्षालयेत् । यावद्गन्धलेपौ नावशिष्येतां तावत् । तत आगत्य सास्तरणे

१ 'कायम्' क० ख० पाठः । २ । 'प' ख० पाठः । ३ । 'र्थे' क० ग० पाठः ।

चतुष्कासने पूर्वाभिमुखस्तिष्ठन् उत्तराभिमुखो वा निर्मलेन शुद्धस्थानभवेन पूतिगन्धिक्रिम्यादिरहितेन सुस्वादुना नदीनद-कूपादिभ्य आहृतजलेन शौचं, तत्र पूर्वं दशभिर्मृत्तिकाभि-र्वामकरं दशवारमुपलिप्य प्रत्युपलेपं जलेन प्रक्षालयेत् । ततः सप्त मृत्तिकाः क्रमेणोभयोर्हस्तयोर्दत्त्वा तौ प्रक्षालयेत् । पादयोरेकैकवारं मृत्तिकां दद्यात् ततः संक्षालयेत् । मृत्तिकापि शुद्धप्रदेशात् खनित्वानीता ससिकता नाति-चिक्कणा न मार्गोषरमूषकखातशौचशेषा गृहलेपभवा स्यात् । शङ्का चेदधिकमपि शौचं कुर्यात् । ततो द्वादश गण्डूषान् कुर्यात् साशङ्कं मनश्चेदधिकानपि विदध्यात् रात्रावर्द्धमपि मार्गे चतुर्थांशमपि, तत आचमनं कुर्यात् । अथ केवलमूत्रो-त्सर्गे वारमेकं लिङ्गं प्रक्षाल्य त्रिवारं वामकरं च पुनः करद्वयं प्रक्षालयेत् । गण्डूषत्रयं च कुर्यात् । मूत्रोत्सर्जनकाले ताव-त्तिष्ठेत् यावन्न लिङ्गात् पश्चान्मूत्रबिन्दुः क्षरेदिति । मन्वा-दिभिस्तु षोडशश्वासावधि तिष्ठेदित्युक्तम् । वमनासृपातादौ तु गण्डूषान् कृत्वा हस्तादिक्षालनं कृत्वाचमनत्रयमेव कुर्यात् । स्नानेऽभिहितेऽप्यायुर्वेदविरुद्धत्वान्न कुर्यात् ।

इत्याह्निकपद्धत्यां सामान्यतः शौचविधौ द्वितीया विश्रान्तिः ॥ २ ॥

---

## अथ दन्तधावनविधिः।

स्वकनिष्ठिकाग्रवत् स्थूलं व्रणरहितं सरलं सत्वचं निर्ग्रन्थिकं नातिशुष्कं नात्यार्द्रं न सद्य उत्पाटितं अपामार्गादिविहितवृक्षभवं निषिद्धपलाशादिवर्जितं स्वाङ्गुष्ठपर्वार्द्धकृतकूर्चकं द्वादशाङ्गुलं दन्तधावनं प्रत्यहं प्रातरेव पूर्वाभिमुखः प्रक्षालितं मन्त्रेण परिजप्य शनैःशनैरेकैकदन्तं शोधयन् कुर्यात्। तदुक्तं नारदेन

"उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम्॥"

दन्तधावनकरणे न कदापि सालसो भवेत्। तदकरणे पुरुषोऽसावधानः स्यात्। तथा च वृद्धशातातपः

"मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः।
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तधावनम्॥"

न केवलमसावधानतैव पुंसः किंतु सुकृतनाशरूपदोषोऽपि भवति। तथैव वाराहपुराणे भगवद्वाक्यमपि

"अकृत्वा दन्तकाष्ठं तु यो हि मामुपसर्पति।
सर्वकालकृतं कर्म तेन चैकेन नश्यति॥"

अन्यदपि

"मुखशुद्धिविहीनस्य निष्फलाः सकलाः क्रियाः॥"

इत्यतोऽवश्यमेव तत्करणीयम्। यद्यपि कदाचित् निषिद्धदिने जलस्य द्वादशभिर्गण्डूषैरेव दन्तधावनं विहितं तथाप्यङ्गुल्या वस्त्रादिभिश्च नैव कुर्य्यात् तत्रातीव दोषश्रवणात्। तथाह शातातपः

"दन्तधावनमङ्गुल्या प्रत्यक्षं लवणं तथा ।
मृत्तिकाभक्षणं चापि तुल्यं गोमांसभक्षणैः ॥"

धर्म्मसारे प्रयोगपारिजातेऽपि च

"अङ्गारवालुकापर्णतृणवस्त्रनखादिभिः ।
न कुर्याद्दन्तकाष्ठं च श्रीकामो दूषिते दिने ॥"

अथ दन्तधावनग्रहणमन्त्रः काशीखण्डे

"आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि(१) च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ॥"

अथ वैदिकोऽपि मन्त्रः

"अन्नाद्याय व्यूहध्वं सोमो राजायमागमत् ।
स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥"

इति । अस्यार्थः हे वनस्पते व्यूहध्वं व्यूहस्वेत्यवगमं कुरु वनस्पतीनां राजा सोमोऽयं वनस्पतिं त्वामागमत् स त्वं चन्द्रसहितो वनस्पतिर्मे मम मुखं प्रमार्क्ष्यते शोधयतु । केन यशसा च भगेन च सौभाग्येन । किमर्थमन्नाद्याय नानाभक्षाय अन्नं च आद्यं च तदर्थमित्यर्थः । वनस्पतिशब्दोऽत्राध्याहार्य्यः । सावधानं भवेति पञ्चवाक्यार्थः(२) । दिवसस्य चतुर्थयामे पुनः शौचं विधाय दन्तधावनं करणीयमिति श्रीमतामाज्ञा । ततो दन्तधावनं प्रक्षाल्य शुचौ देशे प्रक्षिपेत् । ततो द्वादश गण्डूषानपि पुनः कुर्यात् ॥

इत्याह्निकपद्धत्यां दन्तधावनविधौ तृतीया विश्रान्तिः ॥ ३ ॥

१ । 'धृति' ग० पाठः । २ । 'पाद्या' ख० पाठः ।

### अथ देशाचारेण स्नेहमर्द्दनविधिः ।

ततो निर्वातस्थाने दासद्वारा तैलादिना शनैः प्रत्यङ्गमर्द्दनं कारयेत् नातिबलेन, यतो राजकुमारः पुरैव कोमलाङ्गो भवति तदतिकोमलतासंपादने(१)स्नेहमर्द्दने नाडीनां व्यत्ययो न स्यादत इति । अथ मर्द्दनक्रमः । मर्द्दकोऽपि मर्द्दयन् स्वहस्तमूर्ध्वादधो नयेत् नाधस्तादूर्ध्वमिति । तत्फलमपि, शनैःशनैः कृतं तदङ्गानां शुष्कतां दूरीकरोति अन्तर्नाडीनां च दृढतां करोति । बलेन कृतं चेत्प्रत्युत क्षामाण्यङ्गानि करोति । कदाचिद्यवचूर्णहरिद्रादिनापि मर्द्दनं कारयेत् इति, ग्रीष्मे घृतेन कारयेत् परंतु लोकप्रवृत्तेस्तैलेनैवेति । ततः किंचित्काल-मवलम्ब्य स्नायात् । इच्छा चेद्धनुराकर्षणमुद्गरप्रचालनाश्व-परिधावनरूपव्यायामम् अन्यद्वा बलसाध्यं कर्मोत्साहजनकं कुर्यात् शोभनं कर्म चेति । स्नात्वा संक्षिप्तसंध्यापाठादिकं कृत्वा व्यायामं कुर्यादयमेव प्रभूणामप्याशय इति । अन्यदपि स्वयं कृशश्चेद्यथाशक्ति वाजिप्रधावनादिव्यायामान् शनैःशनै-रभ्यसेत्, रोगादिना कृशश्चेत् नैव कुर्यात् । भुक्त्वा सद्यो नैव कुर्यात्, चतुर्थयामे वा दिनस्य कुर्यात्, इति दर्शयिष्यामः ॥ व्यायामं कृत्वा शीघ्रं जलं न पिबेत् न वा भुञ्जीतेति ॥

इत्याह्निकपद्धतौ स्नेहादिमर्द्दनदन्तधावनव्यायामादिविधाने चतुर्थी विश्रान्तिः निश्रेणिः ॥ ४ ॥

१ । 'के' ख० पाठः ।

## अथ स्नानविधानम् ॥

स्नानस्य दृष्टादृष्टफलजनकत्वात् तत्प्रातरेव करणीयम्। तस्य दृष्टं फलं तु मलापनयनपूर्वककर्मार्हतापादकत्वम्, अदृष्टं तु परमेश्वरभजनद्वारा पुण्यलोकादि। तत्र याज्ञवल्क्यः

"अस्नातस्य क्रियाः सर्वा भवन्तीह्याफला यतः।
प्रातः समाचरेत् स्नानं तच्चामितफलप्रदम् ॥"

देवीपुराणेऽपि

"स्नानस्य कायिकं पापं तत्क्षणादेव नश्यति।
लक्ष्मीवृद्धिमवाप्नोति देवास्तिष्ठन्ति संमुखाः ॥"

विष्णुरपि

"अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्।(१)
अम्मातेणाभिषिक्तस्य नश्यन्तीत्यवधारणा ॥"

तस्मात् प्रातरेव स्नानं कर्तव्यम्। अथ स्नानप्रकारः

"ससंकल्पं सदा कुर्यात् स्नानदानव्रतादिकम् ॥"

इति मार्कण्डेयोक्तेः स्नानादौ संकल्पस्यावश्यकत्वात् स्नानात्पूर्वं संकल्पं कुर्यात्, स्वयं नो जानीयात् ब्राह्मणेन कारयेत् स्नानमन्त्रान् पठेत् गङ्गां वा विष्णुं वारत्रयं स्मरेत्। मन्त्रेण शुद्धमृदा मस्तकाद्यङ्गानि संस्पृश्य स्वयं स्नायात् नद्यां स्नायाच्चेत् प्रवाहाभिमुखः, तत्राप्यतिवेगवति प्रवाहे दूरं नैव

---

१। 'सततम्' क० ग० पाठः।

गच्छेत् तादृशे जलवेगे स्नातुमशक्यत्वात् प्रवहणभयादपि । च । तड़ागादौ गृहे च सूर्याभिमुखः पूर्वाभिमुखो वा, गृहे तु ललितचतुष्कासने स्थित्वा परिमार्जितराजमानराजतादि-कुम्भस्थेन शुचिना पुरुषेणाहृतेन जलेन सशिखं स्नायात् । यदा प्रतिश्यायादिना शिरःस्नानं सम्यङ् न जानीयात् तदा जलेन शिरसः प्रोक्षणं कुर्यात्, सामयश्चेन्न स्नायात् आर्द्रवाससा वाङ्मार्जनं कुर्यात् । तत्र जाबालिः

"आशिरस्कं(१) भवेत् स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥"

इति । गङ्गाजलयोगेन स्नानेच्छा चेत् (२) तदा गङ्गाजलपात्रे स्नानीयं जलं पातयेन्न जले गङ्गाजलं निक्षेपयेत् । स्नात्वाङ्गानि कराभ्यां नैव प्रोञ्छयेत् नार्द्रेण नापि शुष्केण वाससा च किंतु निष्पीड़ितधौतकर्पुटं(३) सूर्याभिमुखं सप्तवारं(४) प्रतत्याङ्गानि (५)शोधयेत् तद्वस्त्रं शुष्कवद्भवति । तदुक्तम्

"सप्तवाताहतं पर्णं शुष्कवत् परिकीर्त्यते ॥"

इति । काम्यस्नानं तु पुष्ये जन्मर्क्षे व्यातीपातामावस्यादि-पर्वसु नद्यादिषु स्नायात् । पुलस्त्यः

"पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमावास्यां नदीस्नानं पुनात्यासप्तमं कुलम् ॥"

१ । 'श' ग० पाठ० । २ । 'नेद' ख० पाठः । ३ । 'करपुठ' क० ख० ग० पाठः ।
४ 'रान्' ग० पाठः । ५ । 'ताप्य' क० ख० ग० पाठः ।

इति। विस्तरतस्तु श्रीरणवीरसिंहसदाचारचिन्तामणौ द्रष्टव्यम्। ततः पञ्चकच्छमधराम्बरं कृत्वा द्वितीयं धौतमुत्तरीयं परिधार्य्य वामांसोपरिस्थितशुद्धपर्णे आसने चोपविश्य कुङ्कुमादिना तिलकं विधायैशान्याभिमुख आचमेत्। गायत्र्या शिखाबन्धनं कृत्वा संक्षेपतः संध्यां कुर्यात्। तदा गायत्रीजपस्तवादिकमपि संक्षिप्तमेव कुर्यात्। पूजन(१)प्रकारं माध्याह्निकं कर्मविधिं चाग्रे वक्ष्यामः। अधुना त्वध्ययनादेरावश्यकतया न लिखित इति विज्ञेयं विद्वद्भिरिति। एतत् पूर्वोक्तमखिलं सूर्योदयात् प्रागेवानुष्ठेयम्॥

इत्याह्निकपद्धतौ स्नानविधाननामिका पञ्चमी निःश्रेणिः॥ ५॥

ततो घटीद्वयमश्वपरिवर्तनादिव्यायामं कुर्यात्। तद्विधाय स्नातश्चेद्वेदाध्ययनं कुर्यात् पूर्वपठितावृत्तिं च। ततः सुशीलशान्तचित्तशास्त्रज्ञसदाचारात् स्वाङ्के समाहूताद्विद्वद्वरात् प्रकृतशास्त्राध्ययनं विदध्यात् यावत् प्रथमयामसमाप्तिरिति। अत्रैतदुक्तं भवति। प्रथमघटिकाद्वये हयचालनादिव्यायामः कार्यः, ततः स्थित्वा तदग्रिमषट्सु घटीषु हस्तादिकं प्रक्षाल्य वेदाध्ययनपूर्वकं शास्त्रमधीयीत यावद्यामावसानमिति।

इत्याह्निकपद्धतौ प्रथमयामविश्रान्तिर्नाम षष्ठी निश्रेणिः॥ ६॥

---

१ 'जाप' ख० पाठः।

ततः प्रभुणा समाहूतः सार्थंभोजिभिर्भृत्यैः सह भोजनाय सविनयं महाराजसमीपे समागच्छेत् । ततस्तैराचान्तः प्रह्वीभवन् तदादिष्टासनोपरि तिष्ठेत् । पृष्टः सन् किंचित्पाठादिकं ब्रूयात् । ततः प्रक्षालितहस्तपादः कृतगण्डूषश्च भोजनार्थं प्रसारिते स्वासने नम्राननस्तेषां पार्श्वे एवोपविशेत् पूर्वाभिमुख-श्चोत्तरमुखो न विदिङ्मुखः । तदुक्तम्

"प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः ।
आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति ॥"

अपरं च

"आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥"

विष्णुरपि

"विशुद्धवदनः प्रीतो भुञ्जीत नो विदिङ्मुखः ॥"

पुनरपि स एव

"अन्नं प्रशस्तं प्राश्यं च प्रोक्षितं प्रोक्षणोदकैः ॥"

इति । पुरा भूमिस्थे पात्रे पञ्च प्राणाहुतीर्दत्त्वा ततो भूमेरुत्थाप्य यन्त्रादौ संस्थाप्य भुञ्जीत नो पित्र्ये कर्मणि भूमेरुद्धरेत् । व्यासः

"न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान् महामुने ।
शेषमुद्धृत्य भोक्तव्यं पित्र्यर्थं तु नचोद्धरेत् ॥"

न्यस्तपात्रो भूमिपात्रः, उद्धृत्य यन्त्रादौ चतुष्कपट्टिकादौ संस्थाप्येत्यर्थः। ततस्तत्र सुखोपविष्टोऽनेकविधानि सुगन्धि-शालिसुविधिपरिवेषितशाल्योदनप्रभृति-पञ्चविधभोज्यानि राज-मानायतरजतादिपात्रेषु पुरःस्थान्यपि सानन्दं पश्यन् तूष्णीं तिष्ठन् तदान्नं दृष्ट्वा प्रणमेत्। तदुक्तं ब्रह्मपुराणे

"अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्तदा।
अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्॥"

इति। न सत्वरं भुञ्जीत यावत् प्रभूणामादेशस्ते स्वयं वा भुञ्जीरन्। पितृभ्यो वृद्धेभ्यश्च पूर्वं तदाज्ञां विना भोजनं शयनं च न कार्यमिति। ततस्तैराज्ञप्तो भोजनाय पूर्वं स्थाल्या दक्षिणप्रदेशे जलेन मण्डलं कुर्यात्। तत्र "१ ओं ब्रह्मणे नमः २ ओं रुद्राय नमः ३ ओं इन्द्राय नमः ४ ओं चन्द्राय नमः ५ ओं अर्काय नमः ६ ओं वसुभ्यो नमः" एवं क्रमेण बलीन् दत्त्वामृतोपस्तरणमसीत्याचमनं कुर्यात्। ततो दुर्दृष्टिदोषविनाशार्थं ब्रह्मादीन् स्मरेदादौ भोजनात्। तथाचोक्तम्

"अन्नं ब्रह्मा रसो विष्णुर्भोक्ता देवो महेश्वरः।
इति संचिन्त्य भुञ्जानो दृष्टिदोषैर्न बाध्यते॥"

पुनरपि

"अञ्जनीगर्भसंभूतं कुमारं ब्रह्मचारिणम्।
दृष्टिदोषविनाशाय हनूमन्तं स्मराम्यहम्॥"

आत्मनोऽपि कस्यचिद् दृष्टिर्भवति तन्निवारणार्थं नारदं स्मरेत् 'नारदाय नमः' इति। तथा चोक्तम्

"आत्मदृग्दोषनाशार्थं नारदं संस्मरेन्मुनिम्।"

इति वचनात्। ततः "१ प्राणाय स्वाहा, २ अपानाय स्वाहा, ३ व्यानाय स्वाहा, ४ उदानाय स्वाहा, ५ समानाय स्वाहा" एतादृशीं सूक्ष्माहुतिं दद्यात् यां जिह्वयैव ग्रसेत् दन्तैस्तां न स्पृशेत्। ततोऽश्नीयात् तूष्णीं, नान्नगुणदोषांश्च कीर्तयेदन्यथा चेत् पश्चात् पाचकं बोधयेदिति। अन्नं च चर्पयेति शब्दं न कुर्यादधिकम्, स्वभावेन ग्रासं संचर्व्य निगलेत्। ग्रासं तथा विदध्यात् यथाङ्गुल्य उपरिष्टाङ्गुष्ठादिना नोपसृष्टा भवेयुः। ग्रासोऽपि समः शोभनश्च कार्यः,यतो ग्रसनावसरे तस्मात् कणो नावकिरेत् विशेषा(१)न्मुखव्यादानमपि न स्यात्। संहताङ्गुलिना दक्षिणकरेण ग्रसेत्। कराग्रं मुखे चाधिकं न प्रवेशयेत्। अङ्गुष्ठं न वियोजयेत् नाप्यङ्गुल्यवलेहनं कुर्यात् नाप्यधिकं भुञ्जीत, तदा इतस्ततो न पश्येत् शनैः शनैश्च भुञ्जीतावश्यकं चेत्त्वरं भुक्त्वा सेनादीन्यङ्गानि पश्येत्। अशेषं नाश्नीयात् "पात्रशेषं न भोक्तव्य"मिति स्मरणादिति। अथ व्रतादौ पत्रावल्यां भोजनेच्छा चेत् तदा विहितपलाशादिवृक्षपत्रपत्रावल्यां भुञ्जीत न वटाश्वत्था-

---

(१) "ष" क, ख, पाठः।

कादीनाम्, द्रोणा अप्युक्तवृक्षपलाशानामेव, समस्तिष्ठन् नात्यधो भवन् नाप्यूर्ध्वं पश्यन्। जलं वस्त्रपूतमपि दृष्ट्वा चाल्पमल्पमेव पिबेत् पात्रान्तरेण। जलपात्रं नोद्घाटितमुखं रक्षणीयम्। तथैव भृत्याः साधनीया यथा तदुद्घाटितमुखं कदापि न स्यादिति। नादेयं कौपं च जलं मेलयित्वा न पिबेदेकमेव नद्या वा कूपस्य। अश्वचालनादिव्यायामोत्तर(१) कालं चन्द्रपर्वादौ च न पिबेत् अतितृषितोऽपि चेद्बहु न पिबेदिति। नैकवारं भुक्तोत्थितः शीघ्रं न पिबेत्। पित्त-प्रकृतिश्चेत् कंचित्कालमवलम्ब्यैवाल्पं पिबेत्। मुहुर्मुहुर्वारि पिबेदभूरि इति॥ अथ भोजनकरणविधिः।

क्षुधावान् भुञ्जीत नाजीर्णान्नः, अल्पा चेत् क्षुधाल्पमेव कोमलं भुञ्जीत। न(२) भुञ्जीत तृषितः, जलमपि क्षुधा-काले न पिबेत्।

"तृषितश्चेन्न भुञ्जीत क्षुधितो न जलं पिबेत्।"

इति। अनेकानि विरुद्धव्यञ्जनानि चैकीकृत्य न भक्ष-येत् सलवणेन मधुरमिति। तत्र पूर्वं मधुररसं भुञ्जीत ततो लवणाम्लौ, मध्ये कटुतिक्तादीन् ततो द्रवरूपमिक्षुरस-मित्यादि। कठिनं यच्चोज्यं तन्मध्य एव भुञ्जीत, भोजनान्ते

(१) "रं चन्द्र" ख, पाठः।

(२) "तृषितश्चेत् न भुञ्जीत क्षुधितश्चेत् जलं न पिबेत्" ख, पाठः।

पुनर्द्रवमश्नीयात्। मन्दाग्निश्चेत् पूर्वं लवणार्द्रकं भक्षयेत् ततोऽन्यद्विहितम्, इत्थं भुञ्जानस्य बलं वर्द्धते आरोग्यं च भवति। तदुक्तं विष्णुपुराणे

"अश्नीयात् तन्मना भूत्वा भुञ्जीत मधुरं रसम्।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः॥"

पुनश्च

"प्राग् द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः।
अन्ते पुनर्द्रवाशी तु बलारोग्यैर्न मुच्यते॥"

दध्यादि विना भोजनं निःशेषं न कुर्यात्। दध्याज्यादिकं तु सर्वमेव भक्षणीयमिति। तत्र वृद्धमनुः

"भोजनं तु न निःशेषं कुर्यात् प्राज्ञः कथंचन।
दधिसक्त्वाज्यपललक्षीरमधुपयांसि च॥"

इति। यद्यपि दध्यादिकमशेषं भुञ्जीतेत्युक्तं तथापि महोदारमनसां राज्ञां राजकुमाराणां चाग्रे सर्वमधिकमेव प्रतिपात्रं परिवेष्यतेऽतो यावदीप्सितं पात्रान्तरे कारयित्वा पिबेदिति। पललमत्र तिलमुद्गमिश्रित ओदनः। प्रातर्यामे सति भोक्तव्यं सायं संध्योत्तरं चेति।युवराजस्येच्छा चेत् चतुर्थयामे द्राक्षावातामसितापिस्तादि भोक्तव्यमेव, अन्येषामपि फलानां भक्षणे न दोषः, एतच्चतुर्थयामकृत्ये वक्ष्यामः॥ अथ विरुद्धानि।

(१) "शिखरणं" क, ख, ग, पाठः।
(२) "ष" क, ख, पाठः।

मत्स्यान् भुक्त्वा दुग्धं न पिबेत्। वस्त्रनिष्पीड़ितं दधि भुक्त्वा वातामान्नपि भक्षयेत्। मांसौदनं भुक्त्वा न द्राक्षाः पृथक् झटिति भुञ्जीत। दध्ना मूलिकां न भक्षयेत्। एवमन्येऽप्यन्योन्यविरोधिनो न भक्ष्याः, आयुर्वेदात् ते विज्ञेयाः। अतो यत्कोमलं पथ्यं हितमविदाहि तण्डुलगोधूममुद्गाद्यन्नमजमेषादिमांसं (१) सुपक्वं भुञ्जीत 'दुम्बा' इति प्रसिद्धोऽप्यजभेद एव। तस्यैकवर्षमात्रस्य मांसं ग्राह्यं तत् स्निग्धोष्णं भवति शीघ्रं पचति पुष्टिं च करोति। वृद्धस्य चिरेण पाकः॥ अथ मांसानां प्रकृतिगुणदोषाः।

पार्वतीयस्याजस्य मांसं तु रूक्षमतो वपुषः शुष्कताकृद्भवति। शशकस्य शीतं बन्धकरं च। सूकरस्योष्णं पुष्टिकरं बल्यं सद्यः पचति। मृगस्याप्युष्णं शरीरशुष्कतापादकं च। तित्तिरिलावककबटेरादेस्तु मांसं स्निग्धं हृद्यं च। अन्यत् सद्योहृतं मत्स्यमांसं शीतं यातयामादिकं तूष्णं तत्सेवितं प्रत्युत वपुःशोषणं करोति। तस्मादत्रापि यत् स्वानुकूलं तद्भक्षयेत्। परन्तु शीतकाले स्निग्धोष्णं सेव्यं ग्रीष्मे शीतं हृद्यं स्निग्धं च। वर्षायां तु रूक्षाण्यपि सेवेत, साज्यानि शाकानि वर्ज्यानि नव्यानि तु सुतराम्। सूर्योदये चास्तसमये नैव भुञ्जीत नापि मध्याह्ने पर्वादौ च। शीघ्रं

(१) "आमांसादि" क, ख, ग, पाठः।

भुङ्क्ते (१) चेद् भोक्तृपङ्क्तिमवलोक्याचमनं कुर्यात्। कदाचित् कश्चिदपि भुञ्जीत चेत् तदाचमनमपि न कुर्यात्। तत्र सर्वेषु भुक्त्वा तिष्ठत्सु स्वयमाचमनं कुर्यात् पश्चादासनान्तरे स्थित्वा हस्तपादौ प्रक्षालयेत् जलान्तरेण गण्डूषानपि कृत्वा-(२)गस्त्यादिस्मरणं कुर्यात् यथात्यादेश्च। तदुक्तम्

"अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम्।
भुक्तस्य परिपाकार्थं स्मरेद्भीमं च पञ्चमम्। १
आतापिर्भक्षितो येन वातापिश्च महाबलः।
समुद्रः शोषितो येन तमगस्त्यं स्मराम्यहम्॥ २
ययातिं च सुकन्यां च च्यवनं शक्रमश्विनौ।
भोजनान्ते स्मरेद्यस्तु चक्षुस्तस्य न हीयते॥" ३

अथवा भगवद्वाक्यं स्मरेत्

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापान(३) समायुक्तः पचाम्यन्नं चतुर्विधम्॥"

अथवा शयनीयोपरि तिष्ठेन्न शयीत। यद्यपि शयनं सुखकरं पाचकं च भवति तथापि भुक्त्वा सद्यःशयनं कफादिवृद्धिद्वारा प्रकृतिविपर्ययं जनयति। "नैव कुर्याद्दिवा स्वाप"-मिति धर्मशास्त्रविरोधादपि। स्वप्नस्वभावश्चेत् तदा कंचित्-कालं सहाध्यायिभिः सह प्रश्नेन स्वयंपठनेन चावलम्ब्य शयीत। तदप्यल्पमेव कुर्यात्। ततश्चाचमनादि कृत्वा

(१) "क्त" ख, पाठः। (२) "स्थित्वात् ततोऽग" ख, पाठः। (३) "नौ समासाद्य" ख, ग, पाठः।

सावधानो भवेदिति । राजपुत्रेण तु शयनं त्याज्यमेव यतो-ऽनेककार्यपर्यालोचनस्यापि स एव समयः । तथा स्वभाव-वशेत्तदा तेन न किमपि कर्तुं शक्येत । अथवा पाठ-पर्यालोचनं वा कुर्यादित्येतद्घटीद्वयं नयेद्भोजनेन, षड्ग्रिमाः क्रीडया । यदि तु बालत्वात् कार्यालोचनेऽनात्मस्तदा यामभेकं क्रीडया(१) नयेदित्यनुपदमेव वक्ष्यामः । इयं प्रभू-णामाज्ञा(२) क्रीडयेदिति ॥

इत्याह्निकपद्धतौ भोजनविधाननामिका षष्ठी निःश्रेणिः ॥ ६॥

अथ भोजने विहितघटीद्वयोत्तरं षट्घटिकासु क्रीडनं विदध्यात् । अथ प्रथमसपादयामोत्तरं याः षट् घटिकास्ताः सपादसंचारैः क्रीडनकैर्नेयाः । अथ क्रीडनमपि तथा विधेयं यथा बुद्धौ राजव्यवहारे वर्तेत । क्रीडासहायिनोऽपि च श्रीमन्महाराजैरादिष्टाः स्वमन्त्रिपुत्रा अन्ये वा सुकुलीनाः सुशीलाः सहाध्यायिनः । सुवेशैस्तैः सह राजकार्यकारिणां तत्प्रतिरूपकैरेव क्रीडयेत् महाराजवदेवाज्ञां तेभ्यो दद्यात् कालिकपारितोषिकं च । तथा तत्कार्यकारितां दृष्ट्वा अकृत-कार्यांस्तानालोक्य क्रुध्येदपि शनैः कृत्रिमक्रोधक्रूरदृष्टा दर्शनेन च तादृशस्य कृतकार्यस्याश्वासनेन तथैवाकृतकार्यस्य

(१) "अन्" क, पाठः । (२) "आ या" ख, ग, पाठः ।

संधर्षणेन च क्रीडयेदिति, कदाचित् कृत्रिमसांग्रामिकव्यूह-रचनया चारप्रेषणेन च तत्तद्वृत्तपरिज्ञानाय, कदाचित् तु गूढचारचालनेन स्वजयोत्तरं तत्तत्कार्यकारिणे ताहृग्धनादि-दानेन, अथवा यावद्दाने श्रीमतामाज्ञा चेत् तावद्दानेनापि भक्ष्य-भोज्यादिभिरपि संतोषयन् क्रीडयेत्। कदाचित् दूरागत-पण्डितसत्कारकारयितव्यरया कवीनां नूतननीतिभव्यनव्य-काव्यश्रवणपूर्वकतत्तत्समयोचितस्य तेभ्यो वितरणेन च दुर्गन्ध-दुर्व्यसनदुराग्रहव्यूतदुर्व्यापारदुःस्वभावदुर्वेषदुर्बुद्धिभिः कुरूपैः सह न क्रीडनं कदापि विदध्यात्। तदवसरे मूत्राद्युत्सर्ग-शङ्का चेत् तदैव तदुत्सर्गं कुर्यात्। क्रीडनकासक्तो नावरोधयेत् कृत्वा हस्तादि प्रक्षाल्याचमनं कुर्यात्। ततो यामद्वया-दनन्तरं श्रीमदुक्ताग्रिमयामेनैङ्गिलिशाधीशानामङ्गरेज़ीनामिकां विद्यामभ्यसेदिति तत्र यामे वक्ष्यामः॥

इति श्रीमन्महाराजात्मजानुष्ठेयाह्निकपद्धतौ क्रीडाविधाननाम द्वितीयविश्रान्तौ सप्तमी निःश्रेणिः॥ ७॥

---

## अथ तृतीयप्रहरकृत्यम्।

अथ मध्याह्नानन्तरमिङ्गिलिशाधीशानामङ्गरेजपदवाच्या-नामङ्गरेजीति-विद्यां याममेकमभ्यसेत्। अथ तत्पदानि घोष-

मागाः स्थगितं च देशान्तरीयभाषाः शृणुयात् तत्तद्देशवृत्तं च। अन्यत्सर्वमवलम्ब्य पुनःपुनर्घुष्टघोषणतया तत्पदार्थादिविमर्शनेनेमामङ्करेजीपदवाच्यामेव दृढीकुर्यात्, यथा कदाचित् तेषां संमेलने स्वयमेव तदुक्तितात्पर्यं जानीयात्। ते च स्वविद्याप्रचाराधिक्यमवेक्ष्य प्रसन्ना भवेयुस्तथाभ्यसनीया सा, अन्येऽपि तत्पठनकुशलाः स्वपार्श्वे रक्षणीयास्तैः सार्कं तथैव भाषया वक्तव्यम्। केचित् स्वयमपि पाठनीयाः। षट् घटिकास्त्वेवमेवावश्यं यापनीयाः। ततो घटीद्वये बुभुक्षा चेदन्तःपुरे मातृभवने गत्वा ससितपिस्तवातामद्राक्षादिभक्षणं कुर्यात्, अन्यरसंसेवनार्हं पक्वान्नं वा, अथवा यथावसरं दाडिमादीन् भक्षयेत्। पठितं मनसा संस्मरन् आहारगमनागमनैर्घटीद्वयं नयेत्। तत्र जिगमिषा नो यदि सत्यां बुभुक्षायामात्मनिलय एवानीय भक्षयेत्। भक्षणं कृत्वा हस्तमुखादीन् प्रक्षालयेत्। दाडिमादिफलस्यान्यस्य वा कस्यचित् स्निग्धवस्तुनो भक्षणं कृत्वा तदैव न जलं पिबेत्। एवं तृतीयं यामं नयेत्॥

इति श्रीमन्महाराजात्मजानुष्ठेयाह्निकपद्धतौ परदेशीयप्रसिद्धरूपविद्याध्ययनपूर्वकान्तर्मातृादिसमीपभुवि यामवर्णना तृतीययामविश्रान्तिर्नामाष्टमी निःश्रेणिः॥८॥

## अथ चतुर्थयामकृत्यम् ।

आद्ये घटीद्वये पुनर्वेगोत्सर्गशौचवर्गान्तशौचाचमनपूर्वकं प्रत्यहं चतुर्थयामेऽपि दन्तधावनं च कुर्यादिति श्रीमतामाज्ञा । भोजनानन्तरमपि तत्कर्तव्यतामाह विष्णुः—

"प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम् ।"

इति । एतद्वाक्यव्यवस्था च विशेषतः सदाचारचिन्तामणौ द्रष्टव्येति, एवमाचरन् आद्यघटीद्वयं नयेत् । ततो महाराजदर्शनार्थं राजसभां गच्छेत् । तत्र गत्वा सविनयो निर्दिष्टासनस्थितो व्यवहारं पश्येत् । तत्र किंचित् स्वयं प्रष्टव्यं चेत् स्वयं श्रीमन्तं पृच्छेदन्ययोग्यं चेद् अन्यद्वारा निश्चिनुयात् । तत्तद्देशागतपत्रं पठतो मन्त्रिणोऽपि वाक्यमूहेत, यद्यद्धर्मशास्त्रानुसारेण वा रणवीरविलासोदितविधिना दीयमानमाज्ञादिकं च शृणुयात् । एतद्धर्मशास्त्रपूर्वकमेतत् महाराजैः स्वबुद्ध्या पर्यालोच्य सम्यक् कृतम् । यद्यपि धर्मशास्त्रे व्यवहारमात्रं निरूपितं तथापि राजकार्यवशात् सर्वशास्त्रावलोकनावसराल्लब्धैर्देशाचारकुलाचारैर्व्यवहारस्यापि वैलक्षण्याच्च स्वयं बुद्ध्या समालोच्यापि क्रियते एव व्यवहारः । श्रूयते हि श्रीमहाराजजम्बूपतेः संग्रामदेववर्मणः पुरावृत्तम् ।

एकदा कयोश्चित् पुरुषयोर्वने निःशङ्कं चरन्त्यौ द्वे वडवे सार्द्धमेव प्रसूते अभूताम् । तत्रैकस्यास्तु शावस्तत्क्षण एव मृतोऽपरस्या एव सार्थजन्मतया शिष्टस्तथाभूतां तामपि स्वमातरं मन्यमानो यथेष्टमुभयोः स्तनपानमकरोत् । सा मृतवत्सापि दुग्धातिशयसंवर्द्धमानापीनभरोद्विग्नतया स्वभाववैलक्षण्येन च जानन्त्यपि परात्मजं स्वयं प्रतिदिनं दुग्धमपाययत् । तत्स्वामिनौ कदाचित् कदाचिन्निलीयोभयोः स्तनपानं कुर्वन्तं तं दृष्ट्वाप्यन्योन्यं किंचिन्नोचतुः अन्तर्भूतलोभलोहशृङ्खलानिरुद्धरसनौ । तस्मिन् समर्थे सति जातरूपत्वात् तस्य मदीयोऽयं मदीयोऽयमिति परस्परं तयोर्वादोऽभूत् । तत एवं विवदन्तौ तौ श्रीमहाराजविराजमानसमाजमाजग्मतुः । तौ तत्रागत्य सर्वं स्ववृत्तान्तं प्रभवे निवेदितवन्तौ । श्रुत्वा श्रीमद्भिरुक्तम् । द्वे अपि वडवे तं शावमपि गृहीत्वोभाभ्यामेव डम्ब(१)रत्वेन प्रसिद्धे तापीतटे प्रातरागन्तव्यम् । ततस्तयोरागमनात् पूर्वं कारिततन्निमज्जनरक्षासाधने तत्पार(२)कवाहकनाविकसमूहसङ्कुले स्वयं तस्थिवान् सहामात्यः । ततस्तथैवागतयोस्तयोस्ते वडवे तं शावं च ग्राहयित्वोक्तम् । अयं शावोऽस्मिन् गम्भीरे तापीजलाशये सपदि निक्षिप्यताम् । तच्छ्रुत्वा तदैवात्मभटैः स तत्रैव

(१) "डम्बर" ख, पाठः । (२) "रक्षा" ग, पाठः ।

निक्षिप्तो मुक्तो च ते वडवे। ततोऽतिगम्भीरेऽपि तस्मिंस्तं पतन्तमेवालोक्य पशुरपि दुस्त्यजेनात्मजस्नेहेन(१) रज्जुना स्वगलार्पितयेव(२)आकृष्टा कृतातिदीर्घहेषिका स्वयमपि तस्मिन्नेवोत्पपात सा। अपरा तु प्रत्युत विमुक्ता सती मुखेन चरितत्वणाङ्कुरान् आदातुमधोमुखी चचाल। तत्क्षणादेव पूर्वाज्ञप्तनाविकैस्तौ मातृपुत्रौ द्वावपि वहिरानीय पुरः स्थापितौ। ततः प्रभुणा प्रोक्तं-यस्येयं वडवा जलेऽपतत्, तस्यैवायं शावः, (३) इति वचनं श्रुत्वा तद्धोटिकास्वामी ससुतां (४) तां जग्राह। द्वितीयं प्रत्युक्तं राज्ञा—यदि त्वया ज्ञात्वैव विवादः कृत इति प्रत्यक्षीभविष्यति कस्याप्यन्यस्यापि च महान् दण्डो भविष्यतीति गन्तव्यमुभाभ्यामिति॥

एवं स्वपूर्वैं रणजीतदेववर्मभिरपि कस्याश्चित् रजकवनितायास्तद्देवरादिगृहीतं तद्वस्तुजातं स्वबुद्ध्यैव सर्वं तत्कार्याकार्यं निश्चित्य तस्यै दापितं प्रवेशिता तैर्निष्कासिता च पुनः स्वनिलये। तद्यथा—

कदाचित् कश्चिदेको रजकस्तापीसरिद्वरातटे वस्त्रप्रक्षालनमकरोत्। तस्य पत्नी तद्भोजनार्थं घृताक्तपोलिकां

(१) "स्नेहता" ख, पाठः। (२) "तेनैव" ख, पाठः। (३) "वत्सः" ग, पाठः।
(४) "तनयां" ग, पाठः।

विधाय भोजनावसरं ज्ञात्वा तां गृहीत्वा तत्पार्श्वं प्रसन्नागमत् 'एहि भुङ्क्ष्व' इति जगाद। ततः सा तेन रजकेनोक्ता। भोजनपात्रमेकान्ते शिलायां संस्थाप्य सत्वरमिहागत्य च भूमौ वस्त्राणि प्रसारयेति। 'आगतो(१)स्मी-त्युक्त्वा तथा कारयामास। ततः स रजकोऽपि वसनानि प्रसार्य तां तत्र संस्थाप्य कृतकृत्यो भोक्तुं शिलापार्श्वेऽतिष्ठत्। (२) स्ववस्त्रेषु दत्तदृष्टिः सन् भोजनमकुरुत। दैवाद्भुञ्जान एव तदैव स मृतोऽभूत्। तथा बोधितैस्तद्बन्धुभिः स मृतो दृष्टः। ततस्तात्कालिकं विधिं विधाय तस्मै महाराजाय विज्ञापितम्, अनयैव भोजने विषं संयोज्य मारितोऽस्माज्जनः पतिरप्यस्याः। तेषां वचः श्रुत्वैवाखिलैः सभासदैरुक्तम्—असंशयं पतिरनयैव हतो नान्यत्कारणं प्रतीयते। तदा तद्वचनं निशम्यैव श्रीमहाराजैरुक्तमेष व्यवहारः श्वो भविष्यति, गम्यतामेभिः परंतु इयं पूर्ववद्रक्षणीया नैव ताडनीयेति। ततः श्रीमद्भिः स्वदूतं प्रत्युक्तं—तत्र गत्वा तामेवं वद, यथा पूर्वदिने पोलिकाः पाचितास्तथैवाद्यापि संपाद्य ताः प्रातस्तापीतीरे गत्वा तत्रैव तथा स्थापनीयाः, तया रजकवध्वा तथैव कृतम्। ततस्तावत्येव काले गते श्रीमद्भिः कुलीनाः सत्यवादिनः स्वजनास्तत्र प्रेषिताः। तत्र गत्वा तद्भोजनमव-

---

(१) "ता" ग, पाठः (२) "स" ख, पाठः

लोकनीयमित्याज्ञापि—तत् स्थानमपि निरीक्षणीयं चाध-स्तादुपविष्टाश्च कीदृशम् । तत् तत्र गत्वा तैरवलो-कितम्, यत्र शिलायां स्थापितं तद्भोजनं तदधस्ता-द्बहुशः कृष्णाः पिपीलिकाः समायान्त्यस्तैर्दृष्टाः । अस्य-चाधः प्रदेशे किंचिदस्ति पिपीलिकाप्रादुर्भाव इति संशय्य तां शिलां दूरीचक्रुः । ततस्तैस्तत्र स्थाने एको महानतिविष-ज्वालिको मृतसर्पः स्थितो निरीक्षितः, ताः पिपीलिकास्तन्मुखा-न्निःसरन्त्यश्च दृष्टाः । ततः श्रीमद्भिस्तत्र गत्वा सर्वेभ्यः सभ्येभ्यो दर्शितमेवं मृतो नानया मारितः सा शुद्धेति । पुनस्तन्निश्च-यार्थं तद्भोजनं श्वाग्रे निक्षेपितं, तद्भुक्त्वा स श्वापि मृतः ॥

एवमेवैतच्छुद्धरघुवंशीयपूर्वतनानां जम्बूभूमिभृतां बहून्येव बुद्धिसाधितानि कार्याणि । तथापि तेषां शैलीप्रदर्शनार्थमिमे द्वे दर्शिते, यतो विलोकिताामलकीर्तयः शुद्धाचाराः शास्त्रो-दितव्यवहाराः श्रीमन्महाराजाधिराजादिपदसंभावितोपपदाः शौर्यौदार्यदयादाक्षिण्यदेदीप्यमानहृदया इमेऽपि श्रीमन्तो-मण्डलाखण्डला अपि शास्त्रेण निश्चित्यापि व्यवहारं पुनः परं स्वबुद्ध्या पर्यालोच्यैव निर्देशं ददते नैव सहसेति ॥

अथान्यदपि यथा तेषां व्यवहारोऽभूत् तथैव वर्तित-व्यमिति । यथा दिनस्य घटिकास्तु कतिपया अत्यल्पाः, राजकृत्यानि तु बहूनि, इति वदित्वा श्रीदेववर्मभिः सपूर्व-

महाराजैरेकोऽर्कादिवारेषु संकेतः कृतः स लिख्यते। कार्य-बाहुल्यं पश्यता तेन सूर्यादिसप्तवारेषु पृथक् पृथक् कार्याणि कारयितुं प्रतिवारमेकैकाधिकारिणः कृताः,सत्यसंधाः स्तेयादि-पराङ्मुखा भर्तुराज्ञापालकाः कुलीना ये। तत्र सूर्यवारे तु युवराजस्य चान्तःपुरस्य च यानि वस्तूनि भूषणयानादीनि कार्याणि वक्तव्यानि च यानि, तेषां संपादने तु महतापदवाच्यो दौवारिकाधीशोऽधिकृतोऽभूत्। स तस्मिन्नेव वारे युव-राजाद्युपयुक्तानि श्रावयेत् कर्तव्यानि च पृच्छेत्, कारयित्वा तानि वस्त्रभूषणादीनि विहितावसरे समर्पयेदिति।

एवं सोमदिने राजमन्त्रीति प्रसिद्धोऽभूत्, स तस्मिन्नेव दिने पुरग्रामजनपदादिदेशविशेषाणां सर्वं कार्यमकरोदिति।

एवं भौमवासरे सेनाया यावन्ति अश्वशस्त्रादिसंग्रहणा-पाद्यरक्षणक्रयदानसेनानिवेश-वेशव्यूहादिकलानिरीक्षणप्रेषणा-ह्वानादीनि यानि कार्याणि तानि महतापदाभिधेयो दल-पतिरिति प्रसिद्धोऽकरोत्कारयामासेति।

एवं बुधे यावन्ति पत्रलेखकलेखनीयसंभावनालेखिता-गतपत्रावेक्षणसंश्रावणप्रेषणादीनि यानि कार्याणि तानि महताकचेहरीक इति प्रसिद्धः सकललेखकाधीशः कृत-वांस्ताकारयदिति।

गुरुदिने यावन्ति धर्मकार्याणि आगतकविपण्डितादि-

सत्कार-धर्मशास्त्रपूर्वकव्यवहारादीनि तानि सर्वाणि धर्मराजा ख्यो महतापदवाच्यो व्यधादिति ।

शुक्रदिवसे महतेतिपदोपपदको रङ्गरसाभिधो यथाकालं नर्तकीनर्तकरागवाद्यविदादीनां नृत्यादिकार्यादीनि कारयामास ।

शनिवासरे तु महतोपपदकः पुरोहितश्चारप्रेषणमागतविज्ञापनं दुष्टानां शूलादिरोपणं कारागारप्रवेशनमोचनादीनि कर्माण्यकारयदिति ।

एवमन्येऽपि पुरुषाः प्रतिकार्यं पृथक् पृथगधिकृता बभूवुस्तेषामिति। एषापि प्राक्तनानां मर्यादा शोभना चेदनुष्ठेया (१) परन्तु अत्यावश्यकं विधेयं विचार्य्येति। अत्र तु पूर्वमेवेयं रीतिः, यथाधिकारं स्वस्वकार्यं कुर्वन्त्येवेति, अतस्तल्लेखनं केषांचित् पूर्वेषां वृत्तान्तनिवेदनार्थमेवेति भावः। एवं व्यवहारान् पश्यन् घटीद्वयं नयेत्। इत्थं चतुर्थयामस्य चतस्रो घट्यो यापिता भवन्तीति। तदनन्तरं श्रीमतामाज्ञामादाय मृगयामारामादिकं गच्छेत्। यद्यपि मृगयाश्वादिचालनेन चललक्ष्यनिपातनेन च राजपुत्राणामानन्दजनिका भवति तथापि प्रत्यहं न विधेया, यतो मृगयाविहारिणां मनोऽन्येभ्यो राजकार्येभ्यो विपर्ययं भजति। दृश्यते च केषांचित् तथा व्यव-

१ 'येति भावः' ख-पाठः।

हारः, भतः कदाचित् तां कुर्यात्। नहि शास्त्रे केवलमृगहननार्थमेव मृगयोक्ता, किंतु तद्व्याजेन स्वजनचित्तपौरुषदेशावलोकनतदिङ्गिताकारसमूहनादीनि कर्माण्युपदिश्यन्ते इति। तत्र तत्र गच्छन् चतुरमनुष्यान्वेषणमपि कुर्यात् यथा स्वपिता करोति च पितामहश्चकार। अथवा यन्त्रचालनादि कर्म कुर्यादायासायमिति। ततस्तैराज्ञप्तो मृगयां वान्यप्रदेशं रमणीयं वा यायात्। ततो मनोऽनुकूलमदुष्टमश्वं हस्तिनं वा शिबिकां वारुह्य धृतरम्यवसनभूषणोऽसिचर्मवर्मादियुक्तश्चित्तोत्साहवर्धकेषु प्रदेशेषु गव्यूतिमितेषु क्रोशत्रयावधिकेषु वा गच्छेत्, अहरहो गच्छन्नपि प्रतिदिनं नवं नवमेव विषयं गच्छेत्पश्येच्च। यदि कदाचित् गच्छतो मार्गे देवालयो वा कश्चन महात्मा विरक्तो वा तं प्रणमेत्, तत्र गत्वा च यथा विभवं यथायोग्यं च सत्कारं कुर्यात्। ये केचिदन्ये तत्पार्श्वचरास्तेषामपि प्रणतिदानादिना संतोषं जनयेत्। विहारार्थं गच्छन्नपि स्वसार्थयायिनं भाण्डागारिकमुपरितनव्ययार्थं रक्षितुं वस्तुजातमुपदिशेदिदम्। त्वया रजतसुवर्णमुद्रास्तत्तद्द्विचतुरर्धांशमिता वस्त्रादयोऽपि स्वपार्श्वे रक्षणीयाः, किमर्थमिति चेत् मार्गागतदेवद्विजयाचकादिदानाय। यदि त्वारामादौ गच्छेत् तदा तद्रक्षकानुत्साहयेत् पुष्पवाटिकाम्बुप्रस(१)वणादीनि

१. 'प्रत्युव' ख, ग, पाठः

प्रत्यहं नवीनान्येव कर्त्तव्यानीति, तथा कृतानि दृष्ट्वा किमपि तेभ्यो दद्यात् यथा ते तदधिकं कुर्युरिति । अथवा अपुगोलकगर्भयन्त्राणि पञ्चदशाद्यावृत्त्या चालयेत् यन्त्रचालनावसरेऽधिकान्यपि जलसाधनानि पार्श्वे रचेत् । धनुराकर्षणं वा कुर्यादश्वपरिवर्तनं वा । ततः सेनासांग्रामिकव्यूहरचनां पश्येत् । कदाचित् तां समीचीनामालोक्य तत्कर्तृभ्यः कारयितृभ्यश्च पारितोषिकं दद्यात्(१)यथा ते तत्र शिथिला न भवेयुरिति । तत आगत्य तेषां तेषां समीचीनतां प्रभवे निवेदयेत्, किंचिद्वृत्तं चेत् तदपि च । ततः सायंतनं कर्म कुर्यात् ॥

इति श्रीमन्महाराजाधिराजात्मजानुष्ठानार्थाह्निकपद्धतौ चतुर्थयामवर्णना चतुर्थयामविश्रान्तिर्नवमी निश्रेणिः ॥ ९ ॥

अथ सायंकालादारभ्य यावत् सुखशयनं रात्रिकृत्यम् । ततः सूर्यमस्ताचलचुम्बिनमालोक्य प्रक्षालितहस्तपाद आसने उपविशेत्, सायंतनं संध्यादिकं च कुर्यात्, यथावसरमीश्वरं ध्यायंस्तिष्ठेदासने । ततो व्यवहारावलोकनेऽधिकृतो यदि यथावकाशं किंचित् कृत्वा तत्कर्म समाप्य व्यवहारस्थाने गत्वा दिनशेषकृत्यानि कुर्यात् स्वयं कारयेच्चाधिकृतेभ्यः । ततो

१ 'ध्यात्' ख, ग, पाठः ।

भोजनार्थं समाहूतो गच्छेत्, प्रभूणां पार्श्वे, तैः सार्द्धं परिमितं भोजनं कृत्वा शतपदानि गच्छेत्, अथवा यथास्वभावं विहरेत् परंतु शीघ्रं न चलेत् न वा प्रयासं कुर्यादिति। ततस्तैरादिष्टः शयनशालायां प्रविशेत् नैकाकी नाप्येकेन सह किंतु बहुभिः सुमतिभिः सुशीलैरिति। यत्र कुत्रापि नैकाकी सहैकेन विशेत्। यत्र कुत्रापि रहसि नैको नैकेन संविशेत्, इति। अन्यदपि ये विरुद्धाचारा ये केऽपि प्रभुभिर्निष्कासिता भर्त्सिता वा पिशुना अविश्वस्ता अज्ञातकुलशीला अपरिचितास्तैः सह वार्तालापमपि न विदध्यात् दूरं तैः साकमेकान्तविहरणं त्विति। ये पिशुना महाराजयुवराजयोरन्तरकारकास्ते ज्ञेयाः। ये तु पौरमन्त्रिवर्गवार्ताबोधका ये तत्तद्‌व्यवहारावलोकनार्थंदत्ताज्ञास्तैः सह संविशेत्, तद्वाक्यं निशम्य कुर्याद्विचार्यैवेति। तत्र गत्वा सुखासने तिष्ठन् कथाप्रबन्धनीतिशास्त्राणि प्राचीनानां राज्ञां कथाश्च तत्कृतानि शोभन(१)कर्माणि भारतादीतिहासपुराणधर्मशास्त्राणि च यानि बुद्धिवृद्धये राज्यवृद्धये च योग्यानि तेष्वेकं यथारुचि शृणुयात्। कदाचित् शौर्यसंपादिका वीररसप्रधाना रघुदिग्विजयपूर्विका धनुर्वेदगाथाश्च शृणुयात्। कदाचित् तु गजतुरगादिलक्षणसंरक्षणविधिप्रतिपादकानि शास्त्राण्याकलयेत्।

---

१ 'नानि' ग, पाठः।

कदाचित् प्रभुसंमतं नाट्यमपि पश्येत्, नाट्यदर्शनमपि तथा तथा तत्कार्यकरकौशलार्थमेव नतु व्यसनायेति। कदाचित् कविगोष्ठीषु परेङ्गिताकारोहनप्रकारप्रहेलिकाप्रबन्धादीनप्याकलयेत्। कदाचित् स्वाधीतं नवं वा कंचिद् ग्रन्थमवलोकयेदिति। एवं रात्रेः प्रथमयामं नयेत्। अथवा यावन्निद्राभिमुखं मनः स्यात् तावत् शृणुयादिति। तत्तत्कथासु स्वयमपि तर्कयेत् पृच्छेच्च। ततोऽधिकान् विसर्जयेत् (१)। ततोऽतिकोमलविचित्रास्तरणसंवीतसत्पेशलगेन्दुकोपधानशयनीयमारोहेत्(२)। दुग्धपानेच्छा चेत् तत्रस्थ एव ससितं सुगन्धि गोपयः पीत्वा शुचिर्भूत्वा सावधानमनास्तत्समयस्मरणीयान् स्मृत्वा शय्यारोहणं कुर्यात्। शयानः पूर्वस्यां दिशि वा दक्षिणस्यां शिरः कुर्यात् नोत्तरपश्चिमयोः। यदि देवस्थानं गुरुशय्या च पश्चिमोत्तरयोः स्यात् तदा पश्चिमदिश्यपि शिरः कुर्यात् उत्तरस्यां तु तदापि नैव। तत उत्थायान्यत्र प्रसारयेत्। चिरप्रसारितं चेत् निगूढबद्धास्तरणोऽपरितनं पुनरास्तरणं प्रसारयेत्, चिरप्रसारिते दुर्जन्त्वादिप्रवेशसंशयात्। तत्समयस्मरणीयान् श्रीरघुनाथपादारविन्दं च रात्रिसूक्तं "शूलेन पाहि नो देवी"ति शूलिनीमन्त्रचतुष्टयं रक्षाकरं

१ 'सभ्य' क, ख, ग, पाठः। २ 'हयेत्' ख, ग, पाठः।

सुखनिद्रासंपादकमन्त्रांश्च सुखशायिनश्च नर्मदां च स्मरेत् ॥ सुखशायिनस्तु ।

"अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥"
"नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥"

अन्यदपि भारते

"सर्पापसर्प भद्रं ते दूरं गच्छ भुजङ्गम ।
जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥
आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्धा शिंशपायाः फलं यथा ॥"

अन्यदपि

"सुखं सर्वं त्वदायत्तं योगनिद्रे यतो नृणाम् ।
अतस्त्वं देहि मे निद्रां यथाकालं यथारुचि ॥
नेत्रास्यनासिकाबाहुहृदयोरसि तिष्ठ मे ।
शयनावसरे भूयो मामुत्थापय कर्मणे ॥
श्लोकद्वयमिदं नित्यं शयने यः पठेत् पुमान् ।
सुखेन निद्रां लभते दुःस्वप्नं नैव पश्यति ॥"

इति । अथवा शयनसदनमपि तु एतादृशं कर्तव्यम्, शयनीयशीर्षप्रदेशे स्थापितपयःपूरितरजतादिकुम्भममलतर-काचकोमलसूक्ष्मतरवासःसमन्तात्संवीतविशदयन्त्रान्तरदेदीप्य-मानपाञ्चिकशिक्यादिनिहित (१) सुगन्धिद्रव्यचूर्णपूर्ण-प्रज्वल-

१ 'विहित' ख, पाठः ।

हशोज्ज्वलप्रकाशभासितान्तरम्, अथवा शुद्धस्फाटिकयन्त्रनिहित-सुरभितैलपूरपूरितदीपप्रभाभासमानमध्यमिति ॥ अथ शयन-विधिः ॥

शय्यामधिरुह्य प्रथमं कियत्क्षणमुत्तानमुखः शयीत, ततो दक्षिणपार्श्वेनाप्यल्पमेव, ततो वामपार्श्वेन सुखं शयीत । यद्यपि सविधे पर्यास्तरणासंस्पृष्टपृष्ठभागेन शयनं श्लेष्मवृद्धिकृत् तथापि भुक्तान्नसमतासंपादकतया तस्य तथा विधानमपि । परं क्षुधार्त्तोऽतिपिपासितस्तु न स्वप्यात् (१) इति । तत्कालेऽपि स्वेष्टदेवं संस्मृत्य विहितसमय एव प्रातरुत्थापनीयोऽहमिति यामिकानादिश्य च शयीत । अन्यदपि कदाचित् जाग्रत् मनसा सावधानः शयालुरिव प्रतीयमानस्तद्यामिकनिद्रा-जागरणान्योन्यालापादीन्यपि सम्यगालोचयेत् । कदाचित् बोधयेदपि तत् तेभ्यः, स्वावसरे त्वया तु एतत् कृतमनेनैत-दुक्तम् भयं शयितो नायमिति । तच्छ्रुत्वा ते कदापि स्वकर्मणि शिथिला अविहितविधानकारका न भवन्तीति । कदाचित् मिषनिमीलिताक्षो जाग्रदेवायमिति संशयानाः कमप्य-नुचितं कर्तुं नोत्सहन्त इति ॥ अथ सुखस्वप्नादिविचारः ।

श्रीमन्महाराजानां राजपुत्राणां शुद्धान्तःकरणानां च स्वप्न-मपि भाविकार्यसिद्धेः सूचकं भवति यतोऽतः कस्यचिदग्रे न कथयेत् । शत्रोरनाप्तस्य च पुरस्तात् कदापि कीदृशमपि

१, स्वपेत्' ख, ग, पाठः ।

स्वप्नं नैव कथयेत्। अथवा स्वप्नविचारज्ञस्य ब्राह्मणस्यान्यस्य वात्मशुभचिन्तकस्याग्रे ब्रूयात्, तेभ्यश्च तत्फलं शृणुयात् सूर्योदयात्प्राक् सूर्यास्तसमये च, मध्याह्ने तु कस्यचिदप्यग्रे नोदीरयेत्। वसन्ते स्वप्नं श्रेष्ठमेव कदाचिदेवान्यथा, ग्रीष्म-वर्षाहेमन्तेषु यथाकथमपि घर्मादिना चित्तवृत्तेरुपप्लुतत्वा-दिति। प्रथमयामगतस्य फलं वर्षेण, द्वितीये षड्भिर्मासैः, तृतीये तैस्त्रिभिः सप्तदिनैरपि, प्रातश्चेत् परदिन एव फलदं भवति। यदि दुःस्वप्नं पश्येत् तर्हि विष्णुसहस्रनामगजेन्द्र-मोक्षचण्डीस्तवादीन् पठेत् पाठयेद्वा ब्राह्मणैः, तान् स्वयं शृण्वन् स्नानं कृत्वा यथाविभवं गोभूहिरण्यघृतान्नादिदान-माज्यावेक्षणं च कुर्यादिति, प्रत्यहं प्रातः प्रातरुत्थायेत्थमेव कुर्यादिति। एषा पद्धतिरग्रेऽपि तत्तद्राजात्मजैर्यविघ्नमिवा-रिधयः सर्वैरेव समाश्रयणीया भविष्यतीति॥

अथ राज्ञां राजपुत्राणां च परमेश्वरपूजनं यथासमयदानं चावश्यकमपि तद्विधिरध्ययनादेरत्यावश्यकतया तत्र प्रभु-भिरनुपदिष्टत्वात् सर्वं नोपदर्शितः सोऽधुना प्रदर्श्यते, यतो-ऽधीतविद्येन स तेनाप्यनुष्ठेयतम इति। अथ सुस्नातो राजपुत्रः सुप्रसारितस्वासने भगवदाराधनार्थमुपतिष्ठेत्। नारायणं(१)चतुष्कासने(२) स्वाभिमुखमेव स्थापयेत्। स्वयं

(१) 'बच' ख, पाठः। (२) 'मं' ख, ग, पाठः।

पूर्वाभिमुख उत्तराभिमुखो वा तिष्ठेत्। ततोऽन्ये तत्समय-प्रवेशोचिता ब्राह्मणाः क्षत्रिया वा तांस्तान् तत्तत्पूजनपात्रा-दीन्यथास्थानं स्थापयेयुः। पूजाजलं ब्राह्मणक्षत्रियाहृतमेव ग्राह्यम्। तत्सर्वं वस्तुजातं नारायणदक्षिणभाग एव रक्षणीयम्। पूजाविधिज्ञो ब्राह्मणोऽपि भगवतो नारायणस्य वामे(१)स्वस्य च दक्षिणभाग एवोपविशेत्। अन्येऽपि शुभ-चिन्तका ब्राह्मणाः पण्डिताः कवयश्चाशीर्वादार्थमागता यथा-स्थानमुपतिष्ठेयुः। चेच्चास्येत् मन्त्रिणोऽपि तत्समययोग्या एव तत्र प्रविशेयुर्वा निर्दिष्टतत्समयकार्यबोधनपृच्छका आवश्यक-कार्यबोधका अपि नापरे कुचैलदुर्गन्धिवस्त्रा दुराशया हीन-जातयोऽपीति। ततः कृतसंध्यो विष्ण्वादिपूजनं कुर्यात्। यद्यपि पूजनं कायेन मनसा वाचा च त्रिविधं भवति तथापि यथासंभवं कुर्यात्। तत्र कायिकं प्राणायामपरमेश्वर-प्रदक्षिण-व्रतोपवासश्रवणदेवस्नपननमनादि। वाचिकं गीता-सहस्रनामादिपठनोचितवाग्विसर्जनापरुषोक्त्यादि। मानसं च सर्वज्ञस्य सर्वशक्तेः सर्वाधारस्य सर्वकारणस्य सर्वरूपस्य सर्वान्तर्यामिनः सजलजलदश्यामलरुचिवपुषः सुचिराभ्यस्त-समस्तकलाकौशलसमुद्भूतनिजाहोपुरुषिकाचिरविवदमानविधि-विष्वक्कर्मकलितातिविमलेन्द्रशिलासालभञ्जिकाचरणनिर्मिति-

(१) 'च' ख, पाठः।

जात-नव्याभिमानतर्जनचर्पटिकायितालौकिकानिर्वचनीयस्वच्छन्दसमुच्छलत्सौष्ठवच्छटागाराङ्घ्रियुगस्य अङ्गुष्ठद्वयनखनिजस्वाभाविकाकारकान्त्यधरीकृतार्द्धेन्दुमण्डलस्य, उभयपार्श्वाङ्गुलिनखकैतवकारागृहातितरांनिबद्धायितोदग्ररागरमणीयतादर्पणाभसेन्द्रगोपराजिरुचेः, न्युब्जीकृतमहानीलघटितशुक्तिकाहारिगुल्फजानुयुगस्य कनककाञ्चीवि(१)गूहितातितप्ततपनीयनिभाधरांशुकोपाधिनिरुद्धायितसचञ्चलाम्भोदनभसो निराकृतकलिन्दकन्यावर्तनाभेः समुन्नतायतांसोरस्कस्य शङ्खचक्रगदापद्मालंकृतमहाचतुर्भुजस्य श्रीवत्सलक्ष्मलक्ष्मीललामाललितकौस्तुभवनमालावि(२)राजमानस्य चतुर्व्यूहविशेषविभूषितस्य पार्श्वप्रदेशलसच्छत्रचामरचारुवेशस्य, पीताम्बरस्याधिष्ठितानर्घ्यमणिमण्डलमण्डितमहाकमनीयतरकार्तस्वरसिंहासनस्य मन्दस्मितशोभिमुखारविन्दस्य, विद्रुमशलाकासौन्दर्यापांनिधिव्ययसंपादकाधरकान्तेः, दन्तद्युतिदूरीकृतकुन्दपरिपक्वदाडिमबीजरचनारुचेः चञ्चन्मकराकृतिकुण्डलामिषमुद्रितमकरध्वजमकररोचिषोऽत्यायतनयनयुगललञ्जीकृताम्बुजवन्धुजात(सिधु ? मधु)द्रवप्रस्यन्दमानमधुकरद्वन्द्वपातकम्पिषत्पुण्डरीकयुगलस्य, परमकारुणिकभक्तानुग्रहानुभावकभावकत्वेन श्रीविष्णोर्मनसा ध्यानमिति ॥

(१) 'नि' ख, पाठः।  (२) 'वि' क, पाठः।

अथ मनसोऽतिचञ्चलत्वात् ध्यानं दुष्करं राजपुत्राणां सुकुमारत्वात् कार्यबाहुल्याच्चेति । व्रतोपवासादयोऽपि राज्ञां कादाचित्का एव । यद्यपि विहिता अपि व्रतादयः सर्वेषां तथापि राज्ञः शरीरस्य सर्वधर्मरक्षकत्वात् सर्वथा रक्षणीयत्वेन तेऽपि ब्राह्मणद्वारा कारयितव्याः कदाचिदावश्यकं स्वयमपि कुर्यादिति । अतो राजतीं काञ्चनीं वा पित्तलादिभवां स्वेष्टदेवमूर्तिं यथारुचि कारयित्वा द्विभुजां चतुर्भुजां वा षोड़शोपचारैः पूजयेत् । यद्वा स्वयंभूशालिग्रामनर्मदेश्वरादीन् पूजयेत् । पूजनार्थं जलमपि ब्राह्मणक्षत्रियाहृतमेव ग्राह्यम् । नारायणस्नानाद्यवसरेऽपि ब्राह्मणेन पूजां कारयित्वा दक्षिण-हस्तेनैव जलपात्रं देयमन्यदपि पूजार्हं वस्तुजातं पुष्पादि । एवं पाद्यादिनीराजनान्तं नित्यं देवाराधनं विधेयं यथा-स्ववृद्धाचारम् । विष्णोः पूजनमपि वैदिकतान्त्रिकमन्त्रभेदेन द्विविधं भवति, तत्रापि सहस्रशीर्षेत्यादिसूक्तमन्त्रैर्देवपूजनं कर्तव्यं न तान्त्रिकैरिति ।

इदमेव स्वचेतसो दृढीकरणोपायः स्वस्य सर्वत्र कल्याण-हेतुरिति नान्यत् । मूर्तेः स्नानतिलकादिकं विधाय स्वपुरः-स्थापिते सविचित्रास्तरणराजतादिचतुष्कासने तां परमेश्वर-प्रतिमां कृतशृङ्गारां स्थापयेत् । ततो मध्याह्नसंध्यामपि तत्रस्थ एव कुर्वीत । अष्टोत्तरशतसंख्याकगायत्रीजपं कुर्यात् ।

एकादशशतसंख्याविधानं तु तत्पराणामेवावश्यकं, राज्ञां त्वनेकविधकार्य्यकारितया यथासंभवं सहस्रशतदशान्यतमसंख्याकजपो विधेयस्तैरिति। ततोऽधिकारी चेत् देवर्षिपितृतर्पणं कुर्यात् ततो वैश्वदेवबलिं ततो हवनं, ततो दानमन्नादीनां छायापात्रं च, तद्देवागन्तुकाधिकृतकविपण्डितविद्वद्वराणामन्योन्यशास्त्रार्थमपि शृणुयात् पृच्छेदपि सानन्दम्। ततश्चातिथिपूजनं च राज्ञां तु प्रतिक्षेत्रं प्रत्यहं प्रतिपथिकमन्नदानं संभवत्येव स्वयमपि प्रत्यहं कुर्यात्। ततस्तत्रागतान् पण्डितादीन् विसर्जयेत्॥

अथ कालविशेषे पात्रविशेषे च दानं, पूर्णिमामावास्यासंक्रान्तिव्यतीपातवैधृतिग्रहराशिपरिवर्तनादौ चन्द्रसूर्यपर्वादौ विशेषतो दानं कुर्यादेव यथाविभवं तीर्थादावपि। प्रतिसंक्रान्ति घृतादितुलामवश्यं कुर्यात्। स्ववर्षप्रवेशेऽपि काञ्चनरजतरसान्नादितुलामवश्यं कुर्यात्, चिरंजीव्यादीनां यथाविधि पूजनं च, अन्यान्यपि विशेषदानानि, सुवर्णराजतादिदेवप्रतिमा-कनकाचलकातस्वरकल्पवृक्षगोभूहिरण्यशय्याम्बरवलयनवरत्नगलन्तिकाप्रभृत्यनेकभूषणादीनि। अन्यच्च देवालयेषु दीपावलीदानमन्धकारवति पथि प्रज्वलितदीपनिधापनं, हेमन्तेऽनुदिनमूर्णामयक्षौमदुकूलसतूलविविधवसनानि लोहाङ्गीष्टिकादीनि च ग्रीष्मेऽनुपथं प्रपाप्रस्रवण-

चालनभर्जितचणकान्नादीनि पात्रेभ्यो देयानि, प्रतिरङ्कविधवान्धपङ्ग्वादिभ्यो यथाप्राणसंरक्षणभोजनादिकं दद्यात्। अन्ये ये केऽपि संतोषिणः कुलीनाः दरिद्रा अपि याच्ञासु लज्जमाना गृहस्थाः कुटम्बिनस्तेभ्यो दानं सुमहाफलकम्। प्रतिमार्गदेवमन्दिरधर्मशालादि निर्जलप्रदेशे निर्झरतड़ागवापीकूपतरङ्गिणीकूलविधानादीनि निर्जनाटव्यां क्रोशद्वयोपरि चतुष्क्रोशोपरि च स्वजनस्थानं कारयेत्। तत्र भटान् स्थापयेच्च यथाध्वगानां भयं न स्यात्। अथ कस्यापि महात्मनो दर्शनार्थमपि गच्छेदेतदपि पुण्यजनकं भवति। एवं बहून्यपि दानादीनि एकैकाधिकफलानि लोकशास्त्रसंमतान्यपि सन्ति। परन्तु दानादीनि कुर्वन्नपि राजा प्रजारक्षणं तद्वर्धनं च प्रत्यहं श्रेयो मन्येत, यतो दानादीन्यपि तन्मूलान्येवेति।

एवमुक्तप्रकारेण पूजनं कृत्वा संशुद्धसद्रावितघृतं छायापात्रमवलोक्य पूजाप्रकल्पितं देयद्रव्यं ब्राह्मणेभ्यो दापयित्वा स्वयं दत्त्वा वाप्याप्यावश्यकं कुर्यात्। अन्यदपि आवश्यकं कार्यं ब्राह्मणेनैव कारयित्वा पूजावस्त्राण्युत्तार्य वसनान्तराणि संधार्य प्रथमप्रबोधितस्वागमनस्य पितुरादेशाद्राजसभायां तत्पार्श्वे गच्छेत्। कृतप्रणामः सविनयस्तेनादिष्टे चासने न्युपविशेत्। प्रश्नं विना किमपि न ब्रूयात्, नान्येन

साकं यदा तदा तत्पार्श्वस्थो न वदेत् । न निर्भीकत्व- मनालोचनशीलत्वं च प्रकटयेत् । अवश्यं वक्तव्यं चेत् सविनयं प्रभून् महाराजादिपदैः संबोध्य तत् कथयेत् । तदा किंचिदुन्मिषितनेत्रस्तद्वदनावलोकनपरस्तदाज्ञां शृणुयात् मनो नान्यत्र यापयेदिति । तदुक्तार्थं मनसावधारयंस्तिष्ठेत्, तदा तेषां तात्कालिकीं तदासनस्थितिं वचनव्यवस्थां चान्यदाचरणं तात्कालिकममात्याचारादिकं सर्वमवधारयेत् । यदुच्यते(१) पित्रा निर्वि॰स्वमेव तत्कर्तुं सांप्रतमिति वदेत् । विचारणीयमपि चेत् तदा तदङ्गीकृत्य कालान्तरे ब्रूयात् तत्तात्पर्यम् । यदि च कालविलम्बासहिष्णु कार्यसिद्धिहेतु- परिणामं तत्कार्य्यं स्वबुद्ध्यारूढं स्यात् तत्तु तदैव सपरिपाकं वदेत् । रहस्यं चेत् तद्रहस्येव ब्रूयात् तदा । यस्योपरि श्रीमतामल्पा दृष्टिस्तं तदा नैव पश्येत्, पुत्रविशेषात् तमपि बहु न पश्येत्, स्वगाम्भीर्य्याल्पत्वप्रतीतिस्तेन प्रभोर्मनसि किमिदमिति संशयश्च स्यात् । ये प्रभुणा तर्जिता निष्का- सिताश्च समाजात् तान् स्वपार्श्वे न प्रवेशयेत्, स्वकोपमपि तेषामुपरि न प्रकटयेदुदासीनतया तेषु वर्तेत । कदापि पितुः प्रेमातिशयत्वेन राजपुत्रोऽहमिति किमु कार्यकारणमिति प्रमादो न संपादनीयः । प्रभूणां प्रेमापि विलक्षणमेव,

(१) 'र्घ्वत' ग. पाठः ।

यतोऽन्यथाचारिणं पुत्रमप्येवमन्यन्ते राजानो नैव स्मरन्त्यपि क्वास्ति स इति ॥

श्रूयते हि पुरा रामायणे रघुवंशीयसगरेण राज्ञा स्वस्यौरस्योऽपि पुत्रो निष्कासितः प्रमादित्वात्, अप्रमाद्यपि सकलगुणगणागारः कदाप्यस्पृष्टसतूलकोमलास्तरणानावृतभूमिपृष्ठसदाचारसखौज्ज्नैकखेलासंहृष्टमानस (१) दृष्टानव(२)रतरागागारस्वभावारुणतरारुणतरुणकिरणसंभिन्नसरोजराजिरुचिसंस्पर्द्धिमञ्जुलचरणयुगलराजपुत्रीसीतासमन्वितः सानुजः श्रीरामचन्द्रोऽपि दशरथेन राज्ञा वनाय निर्द्दिष्टश्च । आधुनिकेनापि इन्द्रप्रस्थाधिपेन जाहाङ्गीरनाम्ना स्वपुत्रः कारागार एव मारितः । अन्यदपि नादिरोपनामकतनायुदेशाधिपतिना काबुलत्वेन प्रसिद्धपत्तने निजात्मजस्याक्षिणी निष्कासिते, इति बहिर्भूतलोकापवादभयसदाचारवद्भिर्भवितव्यं राजपुत्रैः । असदाचारेण वर्तमानस्य मम लोकाः किं करिष्यन्तीति कदाप्यात्मनि न संभावनीयमिति । यतः सर्वज्ञैरपि श्रीरामचन्द्रैः सैव सकलसतीधैर्य्यधौरेयमाणा जनकराजपुत्री निर्भरगर्भखेदखिन्न(३)हृदया दरमप्यसत्यदूरीकरणाय यदर्थंव्यर्थीकृतताम्यन्नक्रचक्रकच्छपचक्रवालकारुण्यपदविलङ्घितवारिधिभिः स्वपतिप्रत्यहप्रवर्द्धमानान्तरनवनवोदयदकृत्रिमप्रेमपरम्परा-

(१) 'घा' ख, ग, पाठः । (२) 'रतरतराग' ख, ग, पाठः । (३) 'ल' ग, पाठः ।

प्रत्यक्षीभूतैकमूर्तिरिव सीता केवललोकापवादादेव वने प्रेषितेति। यतः राजपुत्रादीनामपीयं व्यवस्था, राज्ञा-मन्यैस्तु सर्वदैव साशङ्कं सदाचारेण वर्तितव्यमिति। राज-भयाद्भवन्तु लोका धर्मिष्ठा वयं तु राजपुत्राः सुखानुभवैकार्थ-जन्मानः किमाचारेणेति कदापि न चिन्तनीयम्, यतोऽखिलस्य पुत्र एवैहिकपारलौकिकसुखसाधनमिति। नहि सुखं सदा-चारेण विना भवति कुत्र कस्यापि, अतस्तेषां सदाचारेण सर्वे तुष्यन्ति जनाः किमुत राजानः॥

---

अथान्यदपि राजनीतिसूत्राणि, तत्र स्वामिपद्धतिः।

यदि चेत्ररक्षणार्थमभितो निष्पादितोऽपि सकण्टक-शाखिशाखासमूहो यदि न स्वयं दृष्टोऽधिकसमुच्चाचारश्च तदा पशवोऽपि तत् चेवं समीहन्ते कवलयितुं किमुत सर्व-कलाकौशलाश्रया मनुष्याः॥१॥ उत्पादयन्ति च तत्परदेशि-नोऽप्यध्वगाः॥२॥ अनुमीयतेऽनुदिनमासन्नसीमभिरधिकैर-हरहः स्वगमागमार्हा च तत्र पदवी॥३॥ स्तौर्यैरपि तदरक्षित-मित्युपेक्ष्यतेऽन्तरा रक्षकम्॥४॥ भवति च तत्कतिपयैरहोभि-र्निर्बीजम्॥५॥ अनालोचितनिर्बीजतानिदानमूषरीभूतमना-

१ 'तत्रो' ख, पाठः।

कृष्टमात्मनाप्युपेक्षितमासादयन्ति शनकैरूपकृष्टिमादधतोऽप्यरय: ॥ ६ ॥ कथम(पिऽप्य)नवरुद्धारिसृष्टाकृष्टिसततपरावृत्तात्माधिकृतात्मदृष्टे: (१) तत् पश्यन्तोऽपि उदासीनानि भवन्ति मित्राणि ॥ ७ ॥ ये पुरापुराभयतोऽपुरादासीना विजानन्तोऽपि स्वतत्त्वं समीक्षमाणा अपि (२) ततो जहति चात्मनो वृत्तिम् ॥ ८ ॥ सूचयन्ति चानुदिवसकृषीवलविदीर्यमाणविषयं यद्दबलिने पिशुना: ॥ ९ ॥ अपश्यत: समन्तादतिबलिनोऽपि तस्य तथा भवन्त्यपि स्वजना: ॥ १० ॥ असमीक्षितं किं किं नचाभ्युपैति वैरस्यम् ॥ ११ ॥ जडान्यपि नागवल्लीदलानि अदृष्टान्यचिरेण भवन्ति विरसानि ॥ १२ ॥ निरुद्धमपि पयोऽसमीक्षितं प्रयाति परत्वेन ॥ १३ ॥ असमीक्ष्य गच्छतोऽपि राजपथे कदाचिद्भवति पादस्खलनम् ॥ १४ ॥ विध्यति च कण्ठकमकस्मात् पादतलम् ॥ १५ ॥ अनवेक्षितो महानपि पन्था भ्रमयति चित्तं परप्राप्तौ ॥ १६ ॥ असमीक्षित: स्वात्माऽपि चैतन्यं जनयति हृदये जडाध्यासं किमुतान्यत्परकीयम् ॥ १७ ॥ स्वाङ्गान्यप्यनवलोकितानि कलुषीभवन्ति मलयोगात् ॥ १८ ॥ स्वसुखाश्रयोऽपि पितानवेक्षितपदो मदात् (३) प्रभवति ॥ १९ ॥ सौध इव सरजस्कोऽनुपदमावहति चान्तर्जालमालिन्यम् ॥ २० ॥

१ 'द्विप' क, ग, पाठ: । २ 'अपिलती' ग, पाठ: । ३ 'त्युभ' ख, ग, पाठ: ।

बहिरपि भवति तस्य चान्यथाननादिरुचिरेषिवाम् ॥ २१ ॥ पुनरीक्षितोऽपि न तथा हृदये विनोदमाधत्ते ॥ २२ ॥ स्थापयति च तमेकदेशे रुद्रमिवात्मसंमोहात् ॥ २३ ॥ पतस्तन्निदेशवर्तिना भाव्यं राजपुत्रेण ॥ २४ ॥ वेदनिदेशादपि बलीयान् पितुरादेशः ॥ २५ ॥ श्रूयते हि पित्रादिष्टो लोकवेदातिविरुद्धे मातृहनने प्रवृत्तो जामदग्न्यः ॥ २६ ॥ निवृत्तोऽपि ततस्तन्निदेशात् समीक्ष्य चिरकारीति ॥ २७ ॥ तस्मात् पितृमान्येषु पितृवदाचरेत् किं पुनस्तत्पूज्येषु तथाचरणम् ॥ २८ ॥ कदाप्युभयोस्तयोर्न भावयेदन्यथा चेतोऽपि ॥ २९ ॥ तदुक्तमपि चान्तराविनयं क्वापि ॥ ३० ॥ मातरमपि तथैव मन्वानस्तत्सपत्नीरपि स तथा मन्येत ॥ ३१ ॥ कनीयःस्वपि सोदरेषूपजीव्यादिभ्योऽन्वहमकृत्रिमं सौभ्रात्रं दर्शयेच्च ॥ ३२ ॥ यथा न स्युस्तेऽन्यथावृत्तयः ॥ ३३ ॥ तथा वसनाभरणादिभी रञ्जयेत् ॥ ३४ ॥ नावमन्येत बन्धुमेकमपि ॥ ३५ ॥ स रुष्टो(१)ऽप्यान्तरवमानितः प्रकाशयत्यात्मानं विद्य दिव ॥ ३६ ॥ पुनः स सान्त्वनैरपि न याति शान्तिं सहजोऽपि यथाम्बुभिस्तडित् ॥ ३७ ॥ प्रयाति परं स सान्तरः पुनः क्वापि विभीषणवत् ॥ ३८ ॥ दर्शयति च परस्मै पन्थानं गूढमपि स्वीयम् ॥ ३९ ॥ तमासादयति परो बलिनमपि तद्योगात् ॥ ४० ॥ यथानलो महदपि वनं सुसमीर-

---

१ 'द्वो' ख, ग, पाठः।

संयुतः (१) ॥ ४१ ॥ तस्मात् सज्जनैर्नान्तरं कुर्यात् कमपि विनादेशम् ॥ ४२ ॥ तैरपि तस्याज्ञानुवर्तिभिर्भाव्यम् ॥ ४३ ॥ लभन्ते च ते तथा वर्तमाना मह्र्द्धिं प्रतिष्ठां च ॥ ४४ ॥ चिरमधितिष्ठति राज्यमपि तेषाम् ॥ ४५ ॥ प्राप्नुवन्ति च तेऽन्योन्यसंहतेरुच्चतां शिलोच्चयवत् ॥ ४६ ॥ अनम्या भवन्ति परवातैस्तस्मात् ॥ ४७ ॥ अभेद्या भवन्ति भूयिष्ठम् ॥ ४८ ॥ दूरादपि दृश्यन्तेऽरिभिरुच्चत्वात् ॥ ४९ ॥ तस्माद्राज्यं तेन सर्वतोऽवेक्षणेन च ॥ ५० ॥ इति स्वामिपद्धतिः ॥१॥

## अथामात्यपद्धतिः।

पुरा स पारितोषिकनिबन्धनैरमात्यमण्डलं वर्द्धयेत् ॥ १ ॥ स्वामिसंवर्द्धिष्णवोऽमात्याः ॥ २ ॥ यथार्थवादिनश्च ॥ ३ ॥ तद्वर्द्धनं राष्ट्रवृद्धिः ॥ ४ ॥ सर्वत्र सर्वदा तदाधिक्यवर्णनं च ॥ ५ ॥ कोशादिवृद्धिरपि ॥ ६ ॥ तत्कृपाधिक्येऽपि स्वानुयायित्वदर्शनं च ॥ ७ ॥ ततोऽतिभीतिश्चानुदिनम् ॥ ८ ॥ तन्मृत्वाग्मृत्योरिव जुगुप्सेरन् ॥ ९ ॥ अन्योन्यभिन्ना अपि तत्कार्ये संहताः स्युः स्वाङ्गानीव ॥ १० ॥ सहन्ते च ते पराशुगोद्वेगं वृक्षा इव ॥ ११ ॥ आक्रमन्ते क्रमेण परविषयम् ॥ १२ ॥ भवन्ति च ते प्रभोः

---

१ 'ञः' ख, पाठः।

प्रेमगावाणि ॥ १३ ॥ ततो लभन्ते तेऽभिमतार्थम् ॥ १४ ॥ प्रयान्ति च विश्वासपदवीम् ॥ १५ ॥ तेऽपि सुशीलाः सत्यवादिनः सदाचाराः स्वधर्मनिष्ठाश्च ॥ १६ ॥ सवि(१)द्याश्च भवेयुः ॥ १७ ॥ देशकालविभागवेत्तारः ॥ १८ ॥ निर्लोभा (२) ब्राह्मणाश्च ॥ १९ ॥ अधिगतसंपदोऽपि गम्भीराः समुद्रा इव ॥ २० ॥ अगाधहृदयाः कूपा इव ॥ २१ ॥ परेङ्गितज्ञाश्च ॥ २२ ॥ ये परश्लाघिनो न तेऽमात्याः ॥ २३ ॥ भवन्ति हि ते ऽमात्यव्यञ्जनाः ॥ २४ ॥ न तेषु विश्वासः ॥ २५ ॥ इत्यमात्यपद्धतिः ॥ २ ॥

## अथ मित्रपद्धतिः ।

मित्रकुलमपि संवर्द्धनीयम् ॥ १ ॥ समानव्यसनानन्दी मित्रम् ॥ २ ॥ विपदि सहायश्च ॥ ३ ॥ महत्त्ववर्द्धिष्णुः ॥ ४ ॥ समसङ्गतश्च ॥ ५ ॥ परस्परानुमोदकश्च ॥ ६ ॥ हितप्रवक्ता ॥ ७ ॥ अहितनिवर्तकश्च ॥ ८ ॥ पक्षा भवन्ति मित्राणि ॥ ९ ॥ पक्षानुपवर्द्धयेद्राजा ॥ १० ॥ पक्षौ च सम्बन्धिसुहृदौ ॥ ११ ॥ सपक्षोऽभ्युपैति दूरमपि देशं पक्षीव ॥ १२ ॥ भवति सपक्षो विजयाय ॥ १३ ॥ स्वयं च जेतुमशक्योऽरिभिः ॥ १४ ॥ नैकमपि

---

१ 'वि' ख, पाठः । २ 'भिणो' ख, पाठः ।

पद्मसुत्सृजेत् ॥ १५ ॥ एकपक्षत्यागादपि स्यात् स्खलद्गतिः ॥ १६ ॥ नोच्चैः पदं प्रयाति निष्पक्षः ॥ १७ ॥ भवति स नियम्यो महा-नपि पिपीलिकाभिः पतङ्गीव(१) ॥ १८ ॥ असहायो बलवानपि नि (२) लीयते सिंह इव ॥ १९ ॥ ससहायो बलिनाप्युपेक्ष्यते रिपुणा ॥ २० ॥ परिगण्यते च खलु तैरनियम्यः ॥ २१ ॥ नातोऽ-वमन्येत कदापि मित्रम् ॥ २२ ॥ अवमानितमपि दैवादनुनये-दनिशम् ॥ २३ ॥ मुहुरवमानितो भवति हृदयस्फोट इव ॥ २४ ॥ सुहृदपि तत्प्रीतिमापादयेदात्मनि ॥ २५ ॥ स्वप्रेमापि तदात्मन्यारोपयेत् ॥ २६ ॥ वर्द्धेतां तावप्यन्योन्यसाहाय्यात् वृक्षा-विव ॥ २७ ॥ इति मित्रपद्धतिः ॥ ३ ॥

अथ प्रसङ्गात् शत्रूदासीनयोरपि, तत्र शत्रुपद्धतिः ।

अनिष्टचिन्तको रिपुः ॥ १ ॥ वृद्धेरसहिष्णुश्च ॥ २ ॥ नातस्तं विश्वसेत् ॥ ३ ॥ तद्विश्वासाद्भवत्यात्मनो हानिः ॥ ४ ॥ बिडालीविश्वासान्मूषकाणामिव ॥ ५ ॥ भवत्यतो-ऽरिवधः श्रेयान् ॥ ६ ॥ स एकोऽप्यनेकान् क्लिश्नाति राहुरिव सोमार्कौ ॥ ७ ॥ नोपेक्षेताल्पमपि तम् ॥ ८ ॥ स

---

१ 'पतङ्ग' शब्दोऽयमिह स्त्र्यर्थः । २ 'न' ग, पाठः ।

महानसाध्यश्चामय इव ॥ ९ ॥ न विरुन्ध्या(१)द्वलिना ॥ १० ॥ ततः सर्वदा साशङ्कः स्यात् काक इव ॥ ११ ॥ चक्रवर्तिनो निदेशं वहेच्छिरसा ॥ १२ ॥ इति शत्रुपद्धतिः ॥४॥

अथोदासीनपद्धतिः।

उभाभ्यामन्यश्चोदासीनः ॥ १ ॥ कथमपि तमात्मनः कुर्यात् ॥ २ ॥ तत्पराभिलाषमव(२)बुध्येत ॥ ३ ॥ वसनादिदानैस्तमानयेत् स्ववशे ॥ ४ ॥ स यथा नान्यरुचिमपि विदध्यात् ॥ ५ ॥ इत्युदासीनपद्धतिः ॥ ५ ॥

अथ कोशपद्धतिः।

धनादिसंग्रहः कोशः ॥ १ ॥ तमेव विवर्द्धयेत् सः ॥ २ ॥ कोशवृद्धिः सर्ववृद्धेर्मूलं स्वामीव ॥ ३ ॥ निष्कोशस्य भृत्या अप्याश्रयन्ति परान् ॥ ४ ॥ विद्विषन्ति च तमन्वहम् ॥ ५ ॥ परुषवाचो भवन्ति ॥ ६ ॥ अतः प्रजाभ्यो गृह्णीयात् करं तद्वृद्धौ ॥ ७ ॥ नातिपीडयेत् ताः ॥ ८ ॥ दोहनीया गौरिव भूः ॥ ९ ॥ रक्षयेच्च लोकं वत्समिव ॥ १० ॥ इति कोशपद्धतिः ॥ ६ ॥

---

अथ दुर्गपद्धतिः।

कोशद्यर्थमाबध्नीयेद् दुर्गम् ॥ १ ॥ दुःखेनापि गन्तुमशक्यो दुर्गः ॥ २ ॥ जलाटवीगिरिनरभेदात् स चतुर्धा ॥ ३ ॥ तत्राभितो

---

१ 'द्वे' क, ख, ग, पाठः। 'बध्येत' ख, ग, पाठः।

जलावृतभूभागो जलदुर्गम् ॥ ४ ॥ महाटव्या च वनदुर्गः ॥ ५ ॥ परितो गिरिभिश्च (१) गिरिदुर्गः ॥ ६ ॥ अतिविकटगिरेरधित्यकापि सः ॥ ७ ॥ समन्तात् सेनयावृतो नरदुर्गः ॥ ८ ॥ अन्येऽपि च धनसाध्याश्च ॥ ९ ॥ तत्र नरदुर्गमाश्रयेद्राजा ॥ १० ॥ विजिगीषुश्चेत् सः ॥ ११ ॥ तत्र रक्षेत् कुलीनान् युद्धविदः ॥ १२ ॥ न क्षुद्रान् ॥ १३ ॥ नाप्यरिदेशगृहान् ॥ १४ ॥ कुर्याच्च सर्वान् सर्वधान्यादिवस्तुविशिष्टान् ॥ १५ ॥ अधिकाश्मयन्त्रादियुक्तांश्च ॥ १६ ॥ इति दुर्गपद्धतिः ॥ ७ ॥

---

## अथ बलपद्धतिः ।

रक्षेद्बलं राजा ॥ १ ॥ तद्द्विविधं शारीरं सेनात्मकं च ॥ २ ॥ तत्रेन्द्रियपाटवहेतुः शारीरम् ॥ ३ ॥ तद्वर्द्धयेत् तावत् ॥ ४ ॥ तद्वर्द्धनबीजं चावसरे स्नानादिसेवनम् ॥ ५ ॥ स्निग्धोचितभोजनमपि ॥ ६ ॥ वेश्यास्वरुचिः ॥ ७ ॥ परकीया-दूषितासु च ॥ ८ ॥ उत्साहवृद्धिश्च ॥ ९ ॥ तस्माद्वर्धयेदुत्साहमपि ॥ १० ॥ सेना चतुरङ्गिणी ॥ ११ ॥ गजाश्वरथपदातयस्तदङ्गानि ॥ १२ ॥ तेभ्यः स्वदेशार्हमूहेत ॥ १३ ॥ सर्वाण्यपि रक्षेदुत्सवाय ॥ १४ ॥ पदातयोऽश्वाश्चावश्यकाः ॥ १५ ॥ बलान्यपि शूराणि स्युः ॥ १६ ॥

१ 'रिच' ख, ग, पाठः ।

शुक्लापूर्वैवेशानि च ॥ १७ ॥ उल्लसद्वर्मशस्त्राणि ॥ १८ ॥ संग्राम-कलाकुशलान्यपि ॥ १९ ॥ तन्नेता सेनानी: ॥ २० ॥ स च शूरो मतिमान् दृढाङ्गो युद्धकलाकोविदो निर्भीकश्च ॥ २१ ॥ अस्त्रैणो यशस्वी स्वमिभक्तश्च ॥ २२ ॥ अव्यसनी व्यवसायी च ॥ २३ ॥ पर-बलभेदक: ॥ २४ ॥ स्वबलानुकूलने दक्ष: ॥ २५ ॥ नित्योत्साहवान् ॥ २६ ॥ प्रत्यहं बलकलावेत्ती ॥ २७ ॥ कलाशिक्षाकुशल: ॥ २८ ॥ स्वनियम्ययूथपनिदेशक: ॥ २९ ॥ सायंप्रातर्बलवृत्तं शृणुयात् ॥ ३० ॥ आज्ञापयेच्च यामिकान् समये तन्नायकेन ॥ ३१ ॥ व्यूहवेत्ता ॥ ३२ ॥ तदर्थपर्यटनभूमिवित् ॥ ३३ ॥ जनस्थाननिरीक्षक: ॥ ३४ ॥ तच्च स्वसेनानियतस्थितिप्रदेश: ॥ ३५ ॥ सुलभाम्बुमित्तृणं समं च ॥ ३६ ॥ तदरिपुराभिमुखं विधेयम् ॥ ३७ ॥ आक्रमणीयसीमासमीपे वा ॥ ३८ ॥ तत्राभितो भटस्थानम् ॥ ३९ ॥ तदन्तरे विपणिरचना ॥ ४० ॥ पूर्वापरद्वारं चतुर्द्वारं वा कुर्यात् ॥ ४१ ॥ उपद्वारमश्मयन्त्राणि स्थापयेत् ॥ ४२ ॥ पुर: पृष्ठे यामिकोच्चस्थानमारात् ॥ ४३ ॥ तत्रानुरात्रि सशब्दजागरूकभ्रमणम् ॥ ४४ ॥ सौवर्चलगन्धकेङ्गालचूर्णगरीयस्तज्जल (१) प्रान्ते ॥ ४५ ॥ तदभितो निस्तृणकाष्ठनिलयं प्रदेशं कुर्यात् ॥ ४६ ॥

१ 'लं' ख, ग, पाठ:।

तत्कुट्टनपेषणादि मृत्काष्ठयन्त्रैर्मञ्च लोहपाषाणमयैः ॥ ४७ ॥ तत्पात्राणि चर्मणाच्छादयेत् ॥ ४८ ॥ युद्धे त्वार्द्रचर्मणा ॥ ४९ ॥ इति बलपद्धतिः ॥८॥

---

## अथ राष्ट्रपद्धतिः ॥

राष्ट्रं वर्धयेद्राजा ॥१॥ रक्षेदौरसपुत्रवत् ॥२॥ येन राजा तद्राष्ट्रम् ॥३॥ राष्ट्रमूला हि राज्यव्यवहृतिः सर्वा ॥४॥ तस्मात् नातिदण्डयेत् ॥५॥ स्थापयेच्च स्वस्वधर्मे ॥६॥ निर्जलं कूपादिना सजलं कार्यम् ॥७॥ भयस्थाने जनस्थानम् ॥८॥ तत्र क्रोश-द्वयोपरि रक्षाभटाः स्थाप्याः ॥९॥ चतुष्क्रोशोपरि वा ॥ १० ॥ तत्र देवस्थानम् ॥ ११ ॥ रक्ष्याटवी रक्षणीया ॥ १२ ॥ यथा निर्दस्युस्तथा विधेया ॥ १३ ॥ दण्डयेच्च तच्छेत्तारम् ॥ १४ ॥ अन(१)तिगह्वरं चेत् तत्र वसतिः कार्या ॥ १५ ॥ निर्दुष्टं शिष्टं सुभगं च ॥ १६ ॥ इति राष्ट्रपद्धतिः ॥९॥

अथ स्वामिपद्धतिः प्रदर्शितापि युवराजबोधने पुनः प्रदर्श्यते दार्ढ्याय ।

स्वामिमूलं हि राष्ट्रम् ॥१॥ स्वामी च राजा युव-

---

१ 'अति' ख, ग, पाठः ।

राजस्य ॥२॥ तस्मात् तावेव रक्षेतां प्रजाः ॥३॥ अराजकं राष्ट्रं क्लिश्यति दस्युभिः ॥४॥ प्रवर्तते च तत्र मात्स्यो न्यायः ॥५॥ राजापि राष्ट्रं रञ्जयेत् ॥६॥ रञ्जितं न तत् समीहतेऽन्यं राजानम् ॥७॥ प्राप्नोति सोऽतितरां वृद्धिं तस्मात् ॥८॥ वृद्धं च तद्वर्धयेत् तमप्युपायशतैः ॥९॥ अन्योन्यवृद्ध्या धर्मवृद्धिः ॥ १० ॥ धर्म एवोभयोर्मूलम् ॥ ११ ॥ तस्माद् धर्मिष्ठ एव राजा युवराजश्च स्यात् ॥ १२ ॥ न विषयासक्तः ॥ १३ ॥ विषयाश्च शब्दस्पर्शरूपरसगन्धाः ॥ १४ ॥ यथोचितमुपसेवेत तान् ॥ १५ ॥ नच तत्रासज्जेत ॥ १६ ॥ तत्रातिसक्तो विनश्यत्यचिरात् ॥ १७ ॥ यथा वीणाशब्देन मृगः ॥ १८ ॥ कूटकरिणीस्पर्शेन करी ॥ १९ ॥ दीपरूपेण पतङ्गश्च ॥ २० ॥ रसेन मत्स्याः ॥ २१ ॥ गन्धेन भृङ्गपिपीलिकादिः ॥ २२ ॥ अतस्तान्नातिसेवेत ॥ २३ ॥ अतिसेविताश्च ते भवन्ति व्यसनानि ॥ २४ ॥ वाग्दण्डपारुष्यार्थदूषणं चेति त्रीणि ॥ २५ ॥ द्यूतमद्यमृगयास्त्रियश्चापि तानि ॥ २६ ॥ एकमपि व्यसनं विपत्तिहेतुः किमुत संहतिः ॥ २७ ॥ यथातिद्यूतं नलस्य राज्ञः ॥ २८ ॥ यथा मद्यं मधुकुलस्य ॥ २९ ॥ मृगया दशरथस्य च पाण्डोः ॥ ३० ॥ स्त्रीः सुन्दोपसुन्दयोश्च ॥ ३१ ॥ स्त्रीयापि स्त्री तथा ॥ ३२ ॥ यथाग्निवर्णस्य ॥ ३३ ॥

किमुत परकीया वेश्या च ॥ ३४ ॥ परकीयेच्छयैव नष्टो रावणः ॥ ३५ ॥ अपहरति प्राणानपि वेश्या ॥ ३६ ॥ यथोर्वश्यैलस्य ॥ ३७ ॥ तत्र नात्यासक्तिं बध्नीयात् ॥ ३८ ॥ भवन्ति रोगास्तस्मादपि तयोर्दुर्नामाद्याः ॥ ३९ ॥ भजतस्तौ सोऽपदंशतामपि ॥ ४० ॥ स्वीयायामपि सक्तिरप्यसुनाशहेतुः ॥ ४१ ॥ यथेन्दुमत्यामजस्य ॥ ४२ ॥ निर्व्यसनो चिरमधिराज्यमश्नुते ॥ ४३ ॥ अतो भवेदव्यसनो राजा युवराजश्च ॥ ४४ ॥ अतिपरिहासोऽपि व्यसनमेवेति नीतिज्ञाः ॥ ४५ ॥ तस्मान्न तच्छीलो भवेद्विना हेतुम् ॥ ४६ ॥ सहेतुकोऽपि स क्वापि ॥ ४७ ॥ न स कदापि महात्मसु विद्वत्सु च विधेयः ॥ ४८ ॥ भवति स विनाशहेतुरात्मनः ॥ ४९ ॥ साम्बादीनां स दुर्वाससि यथा यदुकुलस्य ॥ ५० ॥ बन्धुपरिहासोऽपि तथा यथा कौरवपाण्डवानां ॥५१॥ विदुषो(१)ऽप्युपहासाद् यथा माथुराणां यवनावध्यत्वं गार्ग्यस्य ॥ ५२ ॥ न विदध्यान्मनागपि राजा राजपुत्रो वा ॥ ५३ ॥ पथि सिंहावलोकी स्यात् ॥ ५४ ॥ तत्र स ताम्बूलादीनपि न भक्षयेत् ॥ ५५ ॥ गच्छन् किमपि नाश्नीयात् ॥ ५६ ॥ तस्मात्स परिहासं वर्जयेत् ॥ ५७ ॥ भवेद्गम्भीराशयः समुद्रवत् ॥ ५८ ॥ शृणुयात् परवृत्तान्तं गच्छन्नपि ॥ ५९ ॥

१ 'लु' क. पाठः ।

न ब्रूयात् किमपि चेद् ब्रूयान्मनाक् ॥ ६० ॥ महीयांसः प्रकृत्या मितभाषिणो भवन्ति ॥ ६१ ॥ किमपि शृण्वन्नान्यत्र मनो योजयेद्विना प्रयोजकालापम् ॥ ६२ ॥ गृह्णीयाच्च ततः सारं भृङ्गवत् ॥ ६३ ॥ शिष्टेषु मधुरभाषी स्यात् कोकिलवत् ॥ ६४ ॥ दुष्टेषु सिंहभाषी च ॥ ६५ ॥ न लङ्घयेन्महतां मर्य्यादाम् ॥ ६६ ॥ सार्थकं श्रुत्वा साध्विति ब्रूयात् ॥ ६७ ॥ इति स्वामिपद्धतिः॥१०॥

## अथ दूतचारोभयवेतनभृत्यपद्धतिः ॥

चिन्तयेद्राजा राष्ट्रवृत्तं दूतेन ॥ १ ॥ प्रत्यहं पत्रव्यूहवाहको दूतः ॥ २ ॥ स च दृढाङ्गोऽतिबलवान् शीघ्रगतिश्च ॥ ३ ॥ निरालसो भक्तश्चाव्यसनी ॥ ४ ॥ अश्वादिवाहकानपि तान् कुर्यात् ॥ ५ ॥ त्वरया दूरवृत्तज्ञानाय ॥ ६ ॥ स्थापयेच्च तान् यथाप्रदेशमध्वन्यपि ॥ ७ ॥ यथागति शीघ्रगामी च तस्मिन् ॥ ८ ॥ ते च परितोषणीया भोज्याद्यैः ॥ ९ ॥ तुष्टा भवन्ति शीघ्रगमाः ॥ १० ॥ इति दूतपद्धतिः ॥११॥

## अथ चारस्य पद्धतिः ॥

तदर्थिकमानश्चारः ॥ १ ॥ उभाभ्यां विदितश्च ॥ २ ॥ स गूढागूढभेदेन द्विविधः ॥ ३ ॥ पटुः प्रवेशकुशलश्चान्त्यः ॥ ४ ॥

चित्रातरराजसभ्यस्य विशिष्टपदस्वारकः ॥ ५ ॥ गूढ़स्त्वविदिता-गमस्वामी च ॥ ६ ॥ सर्वदेशभाषालिपिवित् ॥७॥ ज्ञातौषधिश्च ॥ ८ ॥ धनुर्वेदवार्ताज्ञः ॥ ९ ॥ अश्वादिजातिज्ञश्च ॥ १० ॥ नाना-नाट्यकथाभिज्ञः॥११॥ प्रहेलिकाभाववित्॥ १२ ॥ स्त्रीभैषज्यज्ञः॥१३॥ फलादिभिर्बालरक्षादिरोचकश्च ॥ १४ ॥ स्वप्निन् रसायनकृद्-भ्रमावेदकश्च ॥ १५ ॥ दासकर्मदत्तः ॥ १६ ॥ दीनवृत्तिदर्शका-ऽपि स्वस्य ॥ १७ ॥ तत्तन्मन्त्रिसभागमनशीलश्च ॥ १८ ॥ अन्तःपुरयायिनोविदितवशीकरणादिमन्त्रज्ञः ॥ १९ ॥ जापको विरक्तश्च ॥ २० ॥ पुत्रोत्पादकसिद्धौषधबोधकश्च ॥ २१ ॥ औष-ध्यापणाकृद्दा ॥ २२ ॥ तत्तच्चेटीपरिचारिकाभ्योऽपूर्ववस्तुप्रदः ॥२३॥ धरान्तरनिधिदर्शकश्च॥ २४ ॥बोधकश्च केभ्यश्चन तस्य वृक्षमूलादौ ॥ २५ ॥ मालाकारतोषकश्च ॥ २६ ॥ रजकरञ्जनश्च ॥ २७ ॥ मालाकारिणीप्रियः ॥ २८ ॥ वेश्याविदूषकश्च ॥ २९ ॥ शैलूषेन्द्र-जालिकवेशश्च ॥ ३० ॥ बहुरूपधारकश्च ॥ ३१ ॥ उभयवेतन-(१)उभाभ्यां वेतनग्राह्यः ॥ ३२ ॥ करामलकीकृताखिलविद्यः ॥ ३३ ॥ सुशीलो निर्लोभश्च ॥ ३४ ॥ स्वामिभक्तः ॥ ३५ ॥ पर-भेदने दक्षः ॥ ३६ ॥ विदिताकारेङ्गितश्च ॥ ३७ ॥ परभाव-

१ 'गम' ख, ग, पाठः ।

व्यक्तिवेत्ता ॥ ३८ ॥ बोधनपटुः ॥ ३९ ॥ अनर्गलवाक् ॥ ४० ॥ ऊहापोहवान् ॥ ४१ ॥ विमलवेशश्चोदारः ॥ ४२ ॥ नवरञ्जना-निपुणः ॥ ४३ ॥ विज्ञप्तिसमयज्ञो निरालसश्च ॥ ४४ ॥ निर्भयो मानी च ॥ ४५ ॥ स्वस्वाम्याधिक्यवर्णनकरः ॥ ४६ ॥ नच्चा-त्मीयन्यूनतां कदापि दर्शयेत् परस्मै ॥ ४७ ॥ अनुसमयं स्व-प्रभोरुत्कर्षं बोधयेत् ॥ ४८ ॥ महोत्साहं च ॥ ४९ ॥ नहि वि-तथजल्पकः प्रभवे ॥ ५० ॥ तथापि स्यात् समये ॥ ५१ ॥ नहि सर्वदा वितथभाषी च ॥ ५२ ॥ सर्वं बोधयेत् पत्रेण प्रभवे ॥ ५३ ॥ इति दूतपद्धतिः ॥ १२ ॥

## अथ भृत्यानां पद्धतिः ॥

सुशीलकुलवृत्तान्(१)रक्षयेद्भृत्यान् ॥१॥ शुश्रूषकाश्च भृत्याः ॥२॥ स्वामिभावज्ञाश्च ॥३॥ भोजनवसनादिभिर्भरणार्हास्ते पुत्रा-द्यतिरिक्ताः ॥४॥ ते च मौलवैतनिकभेदेन द्विविधाः ॥५॥ तत्र ते परम्परागता मौलाः ॥६॥ कार्यैकार्थवेतनाश्चान्ये ॥७॥ तदा-भासास्तु यावत्स्वाभीष्टसिद्धिसेविनः ॥८॥ निःस्तेया विश्वास-

१ 'न' चिपेत् ग, पाठः।

वन्तश्च ॥९॥ रहस्याजल्पकाः ॥ १० ॥ शुचयश्च ॥ ११ ॥ शान्ता दान्ताश्च ॥ १२ ॥ प्रसन्नवदना धीराश्च ॥ १३ ॥ सरसानुकूलवाचः ॥ १४ ॥ ॐसत्यमितिवादिनः ॥१५॥ प्रबोधनपटवः ॥१६॥ सार्थगामिनः ॥१६॥ व्यतिरेकासहिष्णवश्च ॥१७॥ यथोक्तकार्यकारिणः ॥१८॥ मतिमन्तः ॥२०॥ ऊहावन्तश्च ॥२१॥ कृतज्ञाः ॥२२॥ कृतिमन्तश्च ॥२३॥ कलाभिज्ञाः ॥२४॥ अनन्यावेक्षकाः ॥२५॥ दत्तपरितुष्टाः ॥२६॥ अयाचनशीलाश्च ॥२७॥ स्वकर्मणि सावधानाः ॥२८॥ परोपकारिणः ॥२९॥ दयालवः ॥३०॥ अपिशुनाः ॥३१॥ उत्साहकारकाः ॥३२॥ शूराश्च ॥३३॥ ते तथा पोषणीया यथा न विमनस्का भवेयुः ॥३४॥ विमनस्का ते परैरन्तरमेलनं विदधते ॥३५॥ मिलितास्ते तान्(१)सूचयन्ति रहस्यमपि ॥३६॥ लब्धरहस्यास्ते यतन्ते तमाक्रमितुम् ॥३७॥ अतस्तान् दृढ़ान् कुर्यात् ॥३८॥ विचालिता अपि परैर्न विचलेयुः ॥३९॥ पाचकानपि स कुलीनान् रक्षेत् ॥४०॥ तान् सर्वं भोजयित्वा भुञ्जीत ॥४१॥ सार्धं वा सहाशिनाम् ॥४२॥ सारसशारिकाचकोरान् वा दर्शयेत् तत् ॥४३॥ इत्थं परिचरन् चिरं सुखमेधते राजा ॥४४॥ प्राप्नोति चाधिकश्रियम् ॥४५॥

१ 'तं' ख, पाठः।

भवति स सर्वसंमतश्च ॥४६॥ यथोक्ताङ्गवान् अपि स्वयमाश्रयेत् पौरुषं पृथिवीशः ॥४७॥ पौरुषेण सर्वं प्राप्यतेऽप्राप्यमपि ॥४८॥ बभूवुरिन्दुपुत्रा दशापि दश ब्रह्माणस्ततस्तद्वपुषैव ॥४९॥ टिट्टिभोऽपि लब्धवांस्तेनाब्धेः स्वाण्डानि ॥५०॥ स्वस्यापि राज्यसंपत् समुल्लसति तेन व्यजनपवनवत् ॥५१॥ भवति तमन्तरा सर्वत्रोपेक्षा ॥५२॥ तद्वतश्चिरसिद्धापि सा ह्रियते परैश्चौरैरिव ॥५३॥ लभते सोऽर्थसिद्धिं विक्रमात् सिंह इव ॥५४॥ हस्तलभ्या अपि ताः प्रयान्ति परमविक्रमतः ॥५५॥ प्रसुप्तस्य सिंहस्येव मृगः ॥५६॥ दैवमेवोपास्यं धीमता किं तेन ॥५७॥ यतो लभ्यतेऽकस्मादपि कनकखनिः ॥५८॥ खनतापि पर्वतादीन्लभ्यन्ते क्वचिन्न तुषकेशादयः ॥५९॥ निखातमपि धनं लीयते तत्रैवापकृष्यते वा कैश्चित् ॥६०॥ तस्माद् दैवं बलवत् ॥६१॥ भवतु नाम तत्तथाऽविपश्चिताम् ॥६२॥ विदुषां तत्तदेव प्राक्तनं तत् ॥६३॥ अतो राज्ञा न कदापि तदाश्रणीयम् ॥६४॥ युक्तियुक्तं पुनरपि तमेवाश्रयेत् ॥६५॥ भवन्ति धर्मार्थकाममोक्षा अपि पौरुषवताम् ॥६६॥ सर्वत्रानपायिनी तेषामेव श्रीः ॥६७॥ इति भृत्यानां पद्धतिः ॥१३॥

सदाचारां रम्यां क्षितिविधिविशेषैर्दिनमिथोः
समोचा भूमिर्वा रविहतुपतिर्यावदुदधिः ।
सुपुत्राद्यास्तावज्जगति रणवीरादिकहरेः
श्रयन्तु श्रीमन्तोऽनुपदसरलां पद्धतिमिमाम् ॥१॥

इति श्रीसकलगुणगणागार-सद्धर्मरचनैकविलसद्विचार-संभावित-वेदाध्ययनप्रकार-नानालंकारसंभार-संभासितकवि-पण्डितमहोदार-श्रीजम्बूकाश्मीराद्यनेकायत्तदेशाधिपतिश्रीमन्महाराजाधिराज-श्रीरणवीरसिंहप्रभुवर्यादिष्ट-श्रीकुरुक्षेत्रमध्यरेखान्तर्गत-पुण्डरीकपुरप्रसिद्धसबालवंशावतंसश्रीदुर्गादत्तात्मजनव्यचण्डीदास-कृता श्रीमन्महाराजपुत्रपौत्रप्रपौत्राद्याकल्पमाश्रयणार्हासनया शान्तिपद्धतिस्तृतीया समाप्ता ॥३॥